डायनोज़ को घर ले आएं,



FREE

Rasna®




SCARE

Game



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनुभूतिः - Knowledge gained from experience
अपशकुनम् - Bad omen
अवचित्य - Having pulled out
अशनम् - Food
उपेक्षा - Negligence
कन्दुकः - Ball
कपोतः - Pigeon
कांस्यम् - Bronze
कोरकम् - Bud
गुडः - Jaggery
गुल्मः - Bush
चुल्लिः - Stove
जुगुप्सा - Disgust
तण्डुलः - Rice
तिन्त्रिणी - Tamarind
दर्वी - Ladle
निर्गन्धपुष्पम् - Flower without fragrance
निर्वापणम् - Putting out
परिगण्यते - Consider
पङ्कमयम् - Muddy
प्रसविका - Midwife
पक्षः - Wing
पल्लवः - Sprout
पारावतः - Pigeon
पारदः - Mercury
प्रचोदनम् - Instigation
बृंहणम् - Sound of an elephant
भृतिः - Remuneration
भेरीवाद्यम् - Drum
मर्दनम् - Trampling
रजकः - Washerman
लयबद्धम् - Agreement of song, dance and musical instrument
लक्ष्यच्युतम् - Missed target
वटवृक्षः - Banyan Tree
शकटम् - Cart
शोषयितुम् - To get dried
सङ्घजीवी - Social being
साक्ष्यचित्रम् - Documentary film
सिंहद्वारम् - Main gate
स्वनितम् - Sound




चन्दमामा

संस्थापकः - 'चक्रपाणिः'　　सञ्चालकः - 'नागिरेड्डी'

# सङ्गीतं हि अपूर्वम्



"यदि बालान् बाल्ये एव सङ्गीतं पाठयामः तर्हि ते कदापि दुष्कृत्यं वा अपराधं वा कर्तुं न प्रवर्तन्ते" इति सुप्रसिद्धः कश्चित् भारतीयसङ्गीतविद्वान् स्वाभिप्रायं प्रकटयति । एषः अभिप्रायः शेक्स्पियर्वर्यस्य- "सङ्गीतद्वेषी यः भवति सः विश्वासघातकः, कुतन्त्री, विध्वंसकः च भवितुम् अर्हति" इत्येतस्य वचनस्य आशयम् एव पुरस्करोति ।

सङ्गीतविषये भारतीयविदुषां मतम् एवम् अस्ति - सङ्गीतस्य व्युत्पत्तिस्थानं निसर्गः । सङ्गीतं नाम कश्चित् ध्वनिः । वायोः सञ्चारात् उत्पद्यमानः स्वनः, जलस्य कलरवः, पर्णानां स्वनितम् इत्यादयः अस्माभिः ज्ञाताः एव सन्ति । पक्षिभिः उत्पाद्यमानः ध्वनिः पक्षिगानशब्देन रुतशब्देन वा निर्दिश्यते । सिंहव्याघ्रयोः गर्जनं, गजस्य बृंहणं च श्रुत्वा क्षणं यावत् भयं भवेत्, किन्तु तेषु यं कमपि रोमाञ्चितं कर्तुं सामर्थ्यम् अस्ति । पुनःपुनः श्रवणेन तेषां लयबद्धता अनुभवपथम् अवतरति ।

ह्यान्स् क्रिश्चियन् आडरसन्वर्यस्य प्रसिद्धायां THE PIED PIPER OF HAMYIN कथायां नायकः किञ्चन वाद्यं वादयति । तदा नगरस्थाः सर्वे अपि मूषकाः बहिः आगत्य नायकम् अनुसरन्ति । सङ्गीतं गायकं श्रोतारं चापि रञ्जयति । एवं तर्हि कथं वा तत् द्वेषः, शत्रुत्वं, तिरस्कारः, अविश्वासः इत्यादीनां कारणं भवेत् ? द्वेषशत्रुत्वादयः एव खलु अपराधस्य मूलकारणानि ?

सङ्गीतद्वारा यः कोऽपि आत्मानम् एव विस्मर्तुं समर्थः भवति । तेन मनसः शुद्धताम् ऐकमत्यं च सम्पादयितुं शक्नोति । एतादृशमनस्सु दुष्कृत्यम् अपराधप्रवृत्तिः इत्यादीनाम्, एतादृशानाम् अन्येषाम् अंशानां वा बीजानां वर्धनं कदापि न भवति ।

सम्पुटः - १३　　एप्रिल् - १९९६　　सञ्चिका - १

प्रतिकृतिमूल्यं रू. ५.०० ♦ वार्षिकं ग्राहकशुल्कं रू. ६०.००



CLUB • YOUNG SCHOLARS' CLUB • YOUNG SCHOLARS' CLUB • YOUNG

If you are a subscriber of *Chandamama* (in any language) and if you are between 6 and 16 years of age, you are eligible to enrol yourself a member of the Chandamama Young Scholars' Club. Please fill up the form below and mail it to us, while sending a token fee of Rs. 50 either by M.O. or by bank draft in the name of Chandamama Young Scholars' Club, Chandamama Buildings, Vadapalani, Madras 600 026. Alternatively if you subscribe to *Chandamama* (in any language) before May 31, 1996, the offer of membership is open to you. You can then order all six or any number of the *Chandamama* books (see back cover) at 25% discount. Packing and postage will be free. If you order all the six books, you get a discount of 30%. You also get a gift of an attractive badge, a decent-looking Membership Card, Membership Certificate, and a handy notebook. What is more, you can participate in talent contests and different activities which the Club will hold.




Dear Sir,

❑ My *Chandamama* subscription No. is........................Please enrol me a member of the **Chandamama Young Scholars' Club.** I am sending my Membership fee of Rs. 50 by M.O./Draft.

❑ I wish to become a subscriber of *Chandamama* (in.....................................language). I am sending by M.O./Draft. Rs. 110 towards one-year subscription (Rs. 60) and Membership fee (Rs. 50).

*(Tick whichever is applicable)*

Signature

Full Name : ..........................................................................................

Name of Parent : ..................................................................................

Mailing Address : ..................................................................................

Permanent Address : ..............................................................................

.......................................................................Date of Birth : ..........................

Class : ..............School : ..........................................................................

YOUNG SCHOLARS' CLUB • YOUNG SCHOLARS' CLUB • YOUNG SCHOLARS'

SCHOLARS' CLUB • YOUNG SCHOLARS' CLUB • YOUNG SCHOLARS' CLUB • YOUNG SCHOLARS'

YOUNG SCHOLARS' CLUB • YOUNG SCHOLARS' CLUB • YOUNG SCHOLARS' CLUB • YOUNG SCHO

वार्ताविशेषः -

# विघ्नकारकाः अंशाः निवारिताः

द्वितीयजागतिकयुद्धस्य (१९३९-१९४५) अनन्तरं त्रिंशद्(३०)वर्षाणि यावत् वियट्नाम्प्रदेशे युद्धं प्रचलत् आसीत् । होचिमन्वर्यस्य नेतृत्वेन युक्ताः स्वतन्त्रशक्तयः फ्रेञ्चसैनिकान् स्वदेशात् अपसारयितुम् अष्ट वर्षाणि यावत् युद्धं कृतवत्यः । फ्रेञ्चसैनिकानां निर्गमनस्य अनन्तरं १९५४ तमे वर्षे जिनेवासमावेशः प्रवृत्तः । तत्र जातस्य निर्णयस्य अनुगुणं वियट्नाम्देशः द्विधा विभक्तः अभवत् । एकस्क नाम आसीत् - कम्यूनिष्ट्-उत्तर-वियट्नाम् इति । अपरस्य नाम - दक्षिणवियट्नाम् इति ।

एतावता अपि तत्र युद्धं तु स्थगितं न जातम् । दक्षिणवियट्नामीयाः साम्यवादीय-गोरिल्लाजनाः उत्तरवियट्नाम्सैनिकानां साहाय्यं प्राप्नुवन्तः दक्षिणवियट्नाम्सैन्यं विरुद्धय युद्धं कृतवन्तः । अमेरिकादेशः दक्षिणवियट्नामस्य साहाय्यम् अकरोत् । १९५९-१९६९ वर्षयोः मध्यकाले अमेरिकादेशेन वियट्नाम्युद्धार्थं ५,५०,००० सैनिकाः प्रेषिताः । सहस्रशः अमेरिकीयसैनिकानां मरणं जातम् । ततः अमेरिकादेशे आन्दोलनम् आरब्धं यत् वियट्नामं प्रति अमेरिकासैनिकाः न प्रेषणीयाः इति । १९७२ तमे वर्षे साम्यवादिजनाः यं घोरं युद्धप्रहारं दत्तवन्तः तस्य परिणामतः अमेरिकादेशेन स्वसैनिकाः प्रतिस्वीकृताः । तथापि इण्डोचीनद्वीपसमूहे वर्षद्वयं यावत् युद्धम् अनुवर्तमानम् एव आसीत् ।

वियट्नाम्प्रदेशे जातम् अपमाननं विस्मर्तुम् अमेरिकादेशेन न शक्तम् । अतः अमेरिका-वियट्नाम् - देशयोः शत्रुता २० वर्षाणि यावत् आसीत् एव । १९९२ तमे वर्षे अमेरिकाध्यक्षः मैत्रीविघटकान् कांश्चन विघ्नांशान् निवारितवान् । एतस्य परिणामतः १९९४ तमे वर्षे अमेरिकाध्यक्षः बिल् क्लिण्टन्वर्यः विघ्नकारकाणां सर्वेषाम् अंशानां निवारणे नैतिकं धैर्यं प्राप्तवान् । ततः वर्षाभ्यन्तरे अमेरिकादेशः वियट्नाम्देशस्य दौत्यसम्बन्धम् आरब्धुं पदं न्यदधात् । अब्राहिंलिङ्कन्वर्यस्य वचनं स्मरन् स्नेहहस्तं प्रसारयन् बिल्क्लिण्टन्वर्यः उक्तवान् - "व्रणानाम् अपगमनस्य अनन्तरम् इदानीं सत्सम्बन्धान् उपस्थापयितुं योग्यः कालः प्राप्तः अस्ति" इति । सन्तोषजनकानाम् एतादृशप्रयत्नानां परिणामतः अमेरिका-वियट्नाम्सम्बन्धः स्नेहपूर्णः सुदृढः च जायमानः अस्ति । वयम् आशास्महे यत् एषः सम्बन्धः चिरकालम् अनुवर्तिष्यते इति ।





# अलौकिकं ज्ञानम्

कमलापुरे विश्वनाथनामकः कश्चित् प्रसिद्धः पण्डितः आसीत् । तस्य कीर्तिः प्रतिष्ठा च देशे सर्वत्र व्यापृता आसीत् । एकस्मिन् दिने जगपतिदेवः नाम कश्चित् विश्वनाथस्य शिष्यः भवितुं सुदूरात् कमलापुरम् आगतवान् ।

विश्वनाथः जगपतिदेवम् आदरेण स्वागतीकृत्य - "मम पुरातनशिष्याः सर्वे अध्ययनरताः सन्ति । भवान् अपि कानिचन दिनानि मम समीपे तिष्ठन्, मया सह अटन् मया उक्तं श्रृणोतु । तदनन्तरम् एव भवतः अध्ययनस्य आरम्भः भविष्यति" इति उक्तवान् ।

जगपतिदेवः विश्वनाथस्य वचनानि अङ्गीकृतवान् । सायङ्काले विश्वनाथस्य शिष्येषु अन्यतमं कञ्चित् उद्दिश्य - "विश्वनाथपण्डितः उत्तमः इति चिन्तितवान् आसम् । किन्तु सः मां सेवकं मत्वा मद्द्वारा कार्याणि कारयितुम् इच्छति खलु ! पूर्वं भवद्द्वारा अपि सः एवमेव कार्याणि कारितवान् वा ?" इति पृष्टवान् ।

"तेन सह गमनेन उत्तमं लोकज्ञानं प्राप्यते । लोकज्ञानविहीनस्य पाण्डित्यं निर्गन्धपुष्पम् इव व्यर्थं भवति" इति सः शिष्यः हसन् जगपतिदेवम् उक्तवान् ।

जगपतिदेवस्य विश्वासः आसीत् यत् 'मम यावत् लोकज्ञानम् अस्ति तावत् अन्यस्य कस्यापि नास्ति' इति । विश्वनाथेन सह अटनं लोकज्ञाननिमित्तम् एव चेत् तेन सह गमनं निष्प्रयोजकम् इति जगपतिदेवः चिन्तितवान् । एतं विषयं गुरुं कथं वदामि इति न ज्ञातवान् सः । एकस्मिन् दिने रात्रौ गुरुणा मिलित्वा - "आचार्यवर्य ! मम प्रभूतं लोकज्ञानम् अस्ति एव । अतः एव सर्वे ग्रामीणाः लोकज्ञानित्वेन माम् अभिजानन्ति । लोकज्ञानेन सह पाण्डित्यम्

अपि स्यात् इति विचिन्त्य अहं भवतः समीपम् आगतवान् । अतः भवान् मह्यं पाण्डित्यं प्रददातु'' इति प्रार्थितवान् ।

जगपतिदेवस्य वचनानि श्रुत्वा पण्डितः विश्वनाथः मन्दहासं प्रकटितवान् ।

अन्यस्मिन् दिने प्रातःकाले स्नानादिकं समाप्य विश्वनाथपण्डितः जगपतिदेवं - ''गच्छाम तावत् । महाकवीनां प्रकृतिविषयकं वर्णनं सर्वदा परिशीलनीयम् अस्माभिः । कवेः तत्काव्यस्य च आन्तर्यम् अपि ज्ञातव्यम् । तदेव लोकज्ञानं नाम'' इति उक्तवान् ।

तदा जगपतिदेवः गुरुं विश्वनाथं विनयेन नमस्कृत्य - ''स्वामिन् ! कवयः सुन्दर्याः स्त्रियाः सौन्दर्यं चन्द्रबिम्बेन तोलयन्ति । किन्तु उपमानभूतः चन्द्रः किं सुन्दरः ? सः भूमेः उपग्रहः । अतः मृन्मयः सः नितराम् असुन्दरः । चन्द्रः कल्पनामात्ररम्यः । सुन्दरी तु वास्तविकतया अपि रम्या'' इति उक्तवान् ।

''भवान् अधिकं जानाति इति तु सत्यम् एव । तथापि गच्छाम तावत्'' इति विश्वनाथपण्डितः जगपतिदेवम् उक्तवान् ।

गुरुः मां श्लाघितवान् चेदपि अध्ययनार्थं न उपदिष्टवान् इति जगपतिदेवः किञ्चिदिव खिन्नः अभवत् । तथापि अनन्यगतिकतया गुरुणा सह प्रस्थितवान् सः ।

मार्गे प्रथमतया महाकविः मुकुन्दः मिलितवान् । सः स्नानार्थं नदीं गच्छन् आसीत् । विश्वनाथपण्डितस्य दर्शनमात्रेण



स्थित्वा नमस्कृत्य सः प्रार्थितवान् - ''पण्डितोत्तम ! भोजनार्थम् अद्य मम गृहम् आगच्छतु'' इति ।

''भवतः गृहे अद्य कः विशेषः ?'' इति विश्वनाथपण्डितः तं पृष्टवान् ।

''श्वश्रूवाः ग्रामतः कश्चित् उत्तमः पाचकः आगतः अस्ति । तेन कृतस्य पाकस्य रुचिः भोजनात् एव ज्ञायते, न अन्यथा । अतः भवता अद्य मम गृहम् आगन्तव्यम्'' इति मुकुन्दः विश्वनाथ-पण्डितम् उक्तवान् ।

विश्वनाथपण्डितः मुकुन्दस्य वचनानि विनयेन निराकुर्वन् - ''सद्यः मम आरोग्यं सम्यक् नास्ति । अतः सप्ताहं यावत् मया रुचिकराणि खाद्यानि न खादनीयानि'' इति



उक्तवान् ।

"हा हन्त ! मया अनिवार्यकारणतः अद्यैव सकलपुरं गन्तव्यम् अस्ति । सकलपुरस्य नरेन्द्राय काव्यं समर्पणीयम् अस्ति च । अन्यथा भवदर्थं पाचकं सप्ताहं यावत् स्थातुम् अवदिष्यम्" इति उक्तवान् मुकुन्दः ।

"तस्मिन् काव्ये केचन दोषाः अवशिष्टाः सन्ति इति भवता उक्तम् आसीत् खलु !" इति पृष्टवान् विश्वनाथपण्डितः ।

"तेषां दोषाणां परिमार्जनार्थं भवतः साहाय्यम् अपेक्षितवान् अहम् । परन्तु भवान् समयः नास्ति इति वदति खलु !" इति उक्तवान् मुकुन्दः ।

तदा विश्वनाथपण्डितः - "काव्ये विद्यमानः दोषः परिमार्जनीयः चेत् प्रथमं तत् काव्यं सम्यक् अध्येतव्यम् । तदर्थम् सप्ताहात्मकः कालावकाशः आवश्यकः भवति । किन्तु तावत्कालं प्रतीक्षितुं भवान् न सिद्धः" इति उक्तवान् ।

मुकुन्दः आत्मनः दुरदृष्टं निन्दन् ततः निर्गतवान् । विश्वनाथपण्डितः जगपतिदेवम् उद्दिश्य - "मम आरोग्यं सम्यक् एव अस्ति । तस्मिन् गृहे भोजनं कर्तुम् अनिच्छन् अहं तथा असत्यम् उक्तवान्" इति अवदत् ।

एतत् श्रुतवति जगपतिदेवे सन्देहाः उत्पन्नाः अभवन् । तथापि सः मौनं स्थितवान् । ततः तौ द्वौ अपि अग्रे गतवन्तौ । तावता मार्गे रामदेवः अभिमुखम् आगतवान् । नगरे वाणिज्यम् आसीत् तस्य । रामदेवः पण्डितं नमस्कृत्य - "स्वामिन् ! अद्यतनभोजनं मम गृहे एव करणीयं भवद्भ्याम्" इति प्रार्थितवान् ।

"अद्य भवतः गृहे कः विशेषः ?" इति पृष्टवान् विश्वनाथपण्डितः ।

"अद्य मम पुत्रः अर्थशास्त्रपठनस्य आरम्भं करिष्यति" इति उक्तवान् रामदेवः ।

"एवं तर्हि पठने अपि वाणिज्यबुद्धिं प्रदर्शयन् अस्ति भवान् । अतः एव खलु पुत्रम् अर्थशास्त्रं पाठयन् अस्ति ?" इति हसन् पृष्टवान् विश्वनाथपण्डितः ।

"सत्यम् । हानिं विना वाणिज्यं

करणीयं चेत् अर्थशास्त्रं सम्यक् अध्येतव्यम् । प्रभूतं धनं दीयते इति उक्तं चेदपि भवान् मम पुत्रस्य पाठनं निराकृतवान् । अतः अहं नगरात् अन्यं कश्चित् पण्डितम् आनायितवान् । तस्य पाण्डित्यं परीक्ष्य सः कीदृशः इति भवान् वदति चेत् अहम् उपकृतः भविष्यामि'' इति अवदत् ।

''एतदर्थम् अद्य एव आगच्छेयम् । किन्तु किं करवाणि ? अद्य अवश्यम् आगच्छामि इति अन्यम् उक्तवान् अस्मि खलु ।'' इति विश्वनाथपण्डितः उक्तवान्, अग्रे गतवान् च ।

ततः विश्वनाथपण्डितः जगपतिदेवम् उद्दिश्य - ''अन्यत्र कुत्रापि भोजनार्थं मम गमनं नास्ति । रामदेवम् अहम् असत्यम् उक्तवान्'' इति अवदत् ।

जगपतिदेवः किमपि न अवदत् । परन्तु 'एषः गुरुः असत्यकथकः' इति चिन्तयन् सः खेदम् अनुभूतवान् । तावति काले पार्श्वग्रामीणः मणीनां वाणिज्यं कुर्वाणः चन्द्रदेवः नाम कश्चित् तत्र समागतः । सः अपि पण्डितं नमस्कृतवान्, उक्तवान् च - ''भवन्तं नेतुं शकटम् आनीतवान् अस्मि । भवता अस्माकं ग्रामम् आगत्य मया क्रियमाणं सम्माननं स्वीकरणीयम्'' इति ।

''भवतः गृहे अद्य कः विशेषः ?'' इति पण्डितः पृष्टवान् ।

''अस्माकं गृहस्य एकः सम्प्रदायः अस्ति यत् प्रत्येकस्मिन् मासे एकः सम्माननीयः इति । एतं विषयं जानन् अस्माकं देशस्य राजा मां





'सम्माननसुधाकरः' इति उपाधिना सत्कृतवान् अस्ति । अस्मिन् मासे भवान् सम्माननीयः इति मम विचारः'' इति चन्द्रदेवः अवदत् ।

तदा पण्डितः हसन् - ''मम दूरबन्धुः कश्चित् दिवङ्गतः अस्ति । अतः अस्मिन् मासे मया किमपि सम्माननं न स्वीक्रियते '' इति उक्तवान् ।

''अहो दौर्भाग्यं मम । सर्वं मम दौर्भाग्यस्य फलम् । आस्तां तावत् । पार्श्वग्रामे चतुरङ्गक्रीडापटुः अस्ति इति श्रूयते । सः वा द्रष्टव्यः'' इति वदन् चन्द्रदेवः ततः निर्गतवान् ।

चन्द्रदेवस्य निर्गमनानन्तरं विश्वनाथ-पण्डितः स्वशिष्यं - ''भवान् खिन्नः मा भवतु । मम बन्धुः कोऽपि न मृतः'' इति अवदत् ।

किं करणीयम् इति न ज्ञातवान् जगपतिः । अग्रे गच्छन्तौ तौ एकम् आम्रोद्यानं प्राप्तवन्तौ । आम्रोद्यान-प्रवेशसमये कुतश्चित् एकं वाक्यं श्रुतं यत् - 'स्वामिन्, अहं भवता सह आगच्छामि वा ?' इति । तस्य श्रवणात् चकितौ तौ द्वौ अपि पृष्ठतः परिवृत्य दृष्टवन्तौ । कृशकायः मध्यवयस्कः जीर्णवस्त्रधारी कश्चित् तत्र स्थितवान् आसीत् ।

तं दृष्ट्वा विश्वनाथपण्डितः - ''किं सोमनाथ ! कः विशेषः ?'' इति पृष्टवान् ।

''स्वामिन् ! पार्श्वग्रामे अधिकं भृतिं यच्छन्ति इत्यतः अहं मासात् पूर्वं पार्श्वग्रामं गतवान् आसम् । ततः ह्यः एव प्रत्यागतवान् । भवतः अद्यतनभोजनार्थं व्यवस्थां कृत्वा भवन्तं वक्तुम् अत्र आगतवान् अस्मि । किञ्चित्कालं वा भवता सह स्थातव्यम् इति मम इच्छा । यदा भोजनसमयः सन्निहितः भविष्यति तदा वयं मम गृहं गच्छाम'' इति उक्तवान् ।

''भवतः गृहम् अहं जानामि एव । भोजनसमये भवतः गृहे उपस्थितः भविष्यामि । भवान् स्वकार्यं कर्तुम् अर्हति'' इति पण्डितः अवदत् ।

''स्वामिन् ! एकं निवेदनम् । भवान् अस्मद्ग्रामे सप्ताहे एकवारं गीतोपदेशं कुर्वन् एव भवति । अहं ग्रामे न आसम् इति कारणतः भवतः गीतोपदेशश्रवणभाग्यं मम

न आसीत् । भवतः क्लेशः यदि न स्यात् तर्हि गीतासारः किञ्चित् श्रावणीयः'' इति सोमनाथः पण्डितम् अवदत् ।

सोमनाथस्य प्रार्थनां पुरस्कृत्य विश्वनाथपण्डितः तं गीतोपदेशकथनेन तोषितवान् । भोजनसमयः सन्निहितः । 'विश्वनाथपण्डितः किमपि असत्यम् उक्त्वा सोमनाथं प्रेषयति' इति चिन्तितवान् आसीत् जगपतिदेवः । परन्तु पण्डितः व्याजं किमपि अवदन् शिष्येण सह सोमनाथस्य गृहं गतवान् । सोमनाथस्य गृहे तृप्त्या भोजनं कृतवान् च ।

भोजनानन्तरं विश्वनाथपण्डितः जगपतिदेवः च ततः प्रस्थितवन्तौ । मार्गे पण्डितः शिष्यं पृष्टवान् - ''मम व्यवहार-विषये भवतः अभिप्रायः कः ?'' इति ।

जगपतिदेवः किमपि वक्तुं न इष्टवान् चेदपि गुरोः अनुरोधकारणतः - ''भवान् प्रपञ्चं शून्यं चिन्तयति । मिष्टान्नभोजनं सम्माननं च तिरस्कृत्य भवान् एकस्मिन् जीर्णे कुटीरे भोजनं कृतवान् । भवतः लोकज्ञानम् अत्यल्पम् । भवता इतोऽपि अधिकं ज्ञातव्यम् अस्ति'' इति धैर्येण उक्तवान् ।

तदा पण्डितः शान्तस्वरेण - ''मुकुन्दः स्वस्य काव्ये विद्यमानान् दोषान् परिमार्जयितुं, रामदेवः पुत्रस्य गुरुं परीक्षितुं, चन्द्रदेवः स्वस्य उपाधिरक्षणार्थं च माम् आहूतवन्तः । अहं तिरस्करोमि चेत् ते अन्यं पश्यन्ति । किन्तु सोमनाथः तेभ्यः भिन्नः एव । सः मम पाण्डित्यनिमित्तं मम सान्निध्यम् अपेक्षितवान् । आसक्तस्य श्रोतुः इच्छायाः पूरणात् एव अस्माकम् उदरं पूरितं भवति । सामान्यानां लोकज्ञानात् भवतः लोकज्ञानं भिन्नं नास्ति । परन्तु पण्डिताः अलौकिकं ज्ञानम् एव इच्छन्ति । एतत् भवान् सम्यक् जानातु'' इति बोधितवान् ।

तदा जगपतिदेवः गुरोः पादौ गृहीत्वा - ''गुरुदेव ! अद्य मम अहङ्कारः अपगतः । एषः मम प्रथमः पाठः । भवतः शिष्यः सन् अहम् एतादृशान् बहून् पाठान् ज्ञातुम् इच्छामि'' इति सगद्गदम् उक्तवान् ।



# प्रामाणिकता

नित्यानन्दः अमृतपुरस्थस्य राघवेन्द्रनामकस्य धनिकस्य गृहे उद्योगी आसीत् । नित्यानन्दः तद्गृहस्य गृहकार्याणि अन्यानि कार्याणि च करोति स्म ।

कदाचित् नित्यानन्दः गृहस्य सम्मार्जनं कुर्वन् आसीत् । तस्मिन् समये कस्मिंश्चित् प्रकोष्ठे एकं रजतनाणकं प्राप्तं तेन । नित्यानन्दः नाणकं गृहस्वामिने राघवेन्द्राय दत्तवान् । नित्यानन्दस्य प्रामाणिकतां दृष्ट्वा सन्तुष्टः राघवेन्द्रः तत् रजतनाणकं नित्यानन्दाय एव दत्तवान् ।

कानिचन दिनानि अतीतानि । राघवेन्द्रस्य पुत्री शैलजा पितरम् उक्तवती - ''मदीयः वज्रकण्ठहारः न दृश्यते'' इति । गृहे सर्वत्र अन्विष्टम् । तथापि हारः न प्राप्तः । अनन्तरं राघवेन्द्रः नित्यानन्दम् इतरान् कर्मकरान् च आहूय - ''मम पुत्र्याः वज्रकण्ठहारः न दृश्यते । भवद्भिः दृष्टः वा ?'' इति ।

''दिनद्वयात्पूर्वं स्नानगृहे सः हारः मया प्राप्तः'' इति उक्तवान् नित्यानन्दः ।

एतत् श्रुत्वा राघवेन्द्रः कोपेन - ''दिनद्वयात्पूर्वम् एव प्राप्तं चेदपि एतं विषयं भवान् मां किमर्थं न सूचितवान् ?'' इति पृष्टवान् ।

तदा नित्यानन्दः उक्तवान् - ''स्वामिन् ! मया प्राप्तः कण्ठहारः भवते दीयते चेदपि मम प्रामाणिकतया सन्तुष्टः भवान् तं हारं मह्यम् एव अदास्यत् । कार्यव्यग्राय भवते कष्टं दातुम् अनिच्छन् अहं कण्ठहारं मत्समीपे एव स्थापितवान्'' इति ।

एतत् श्रुत्वा आश्चर्यचकितः राघवेन्द्रः किङ्कर्तव्यतामूढः सन् नित्यानन्दम् एव पश्यन् स्थितवान् ।






# ८

(रूपधरस्य अनुचराः कृतां प्रतिज्ञां न अनुसृतवन्तः । रूपधरस्य अनुपस्थितौ मायाविनः प्रचोदनेन प्रेरिताः सन्तः ते सूर्यभगवतः धेनूः मारयित्वा पक्त्वा खादितवन्तः । अतः समुद्रे रूपधरसहितानां तेषां नौका निमज्जिता अभवत् । तथापि रूपधरः कथञ्चित् स्वस्य प्राणान् रक्षन् कुत्रचित् तीरम् आगत्य पतितवान् । अनन्तरम्......)

तस्य देशस्य राजा आसीत् महामेधाः। तस्य पुत्री वारुणी । तद्दिने उषसि तया कश्चन विचित्रः स्वप्नः दृष्टः । स्वप्ने तस्याः काचित् सखी दृष्टिगोचरीजाता । सा वारुणीम् उद्दिश्य - "अये वारुणि, कीदृशी अलसा संवृत्ता भवती ? मलिनानि वस्त्राणि राशिरूपेण सन्ति । तेषां क्षालनं करणीयं नास्ति वा ? श्वः प्रचलिष्यति विवाहे भवती मलिनानि वस्त्राणि धरति किम् ? जनाः किं चिन्तयन्ति भवत्याः विषये ? सूर्योदयानन्तरं वस्त्रक्षालनार्थं गच्छाव । अहमपि भवत्याः साहाय्यं करिष्यामि । शकटमेकं सज्जीकर्तुं पितरं सूचयतु । वस्त्रक्षालनस्य स्थलम् इतः सुदूरे अस्ति । तावद्दूरं पादाभ्याम् आगन्तुं न शक्नोमि" इति उक्तवती ।

अनुक्षणं वारुणी उत्थाय सूर्योदयं प्रतीक्षमाणा उपविष्टवती । स्वप्ने सख्या उक्तं स्मरन्ती सा मातरम् उक्तवती - "अहं



आहारं स्वीकृत्य सेवकाः शकटचालनाय गर्दभान् योजयित्वा प्रस्थिताः । बह्व्यः दास्यः अपि शकटस्य पृष्ठतः स्वेच्छया जल्पनं कुर्वत्यः पादाभ्याम् आगतवत्यः ।

किञ्चित्कालानन्तरं ते नदीं प्राप्तवन्तः । गर्दभान् तृणं चरितुं प्रेषितवन्तः । अनन्तरं सर्वे अपि अहमहमिकया वस्त्राणि क्षालितवन्तः । वस्त्रप्रक्षालनानन्तरं समुद्रे स्नात्वा नदीम् आगत्य वस्त्राणि शोषणार्थं प्रसारितवन्तः । पश्चात् भोजनं कृत्वा गीतानि गायन्तः कन्दुकेन क्रीडनम् आरब्धवन्तः ।

क्रीडासमये अकस्मात् कन्दुकः जले पतितः । तत् दृष्ट्वा सर्वे कोलाहलम् आरब्धवन्तः । एतस्मात् जागरितः रूपधरः गुल्मेभ्यः बहिः आगत्य वारुणीं, तस्याः दासीः च दृष्टवान् ।

रूपधरस्य शरीरं पङ्कमयम् आसीत् । तत् दृष्ट्वा वारुण्याः अनुचराः भीत्या वृक्षस्य पृष्ठतः निलीय स्थितवन्तः । वारुणी एका निर्भयेन तत्र स्थितवती । तां दृष्ट्वा उत्थितवान् रूपधरः ततः किञ्चिद्दूरे स्थित्वा विनयेन - "सुन्दरि, भवती मानवस्त्री उत देवतास्त्री इति न ज्ञायते । भवत्याः औन्नत्यं सौन्दर्यं च सूचयति यत् भवती देवता इति । यदि भवती मानवस्त्री स्यात् तर्हि भवत्याः मातापितरौ भाग्यवन्तौ एव । भवत्याः भ्रातृभगिन्यः अपि भाग्यशालिनः । यः भवतीं परिणेष्यति सः अपि पुण्यशाली एव । अहं बहून् देशान् दृष्टवान् अस्मि ।

वस्त्रक्षालनार्थं गच्छामि" इति । अनन्तरं पितुः समीपं गतवती ।

पिता नायकानां सभां प्रति प्रस्थितवान् आसीत् । तम् उद्दिश्य - "तात ! महत् शकटमेकम् इच्छामि । अहं नदीं गत्वा वस्त्राणि क्षालयामि । बहुदिनेभ्यः वस्त्राणि न क्षालितानि । गृहे जनाः बहवः दृश्यन्ते । किन्तु सर्वे अपि नूतनानि वस्त्राणि एव इच्छन्ति" इति उक्तवती ।

तदा महामेधाः - "पुत्रि ! अत्र किं शकटानाम् अभावः ? कीदृशं शकटम् इच्छति भवती ? यत् इच्छति तत् नयतु" इति उक्तवान् ।

शकटं सज्जम् अभवत् । राजकुमार्यै दासीभ्यः च यावत् आवश्यकं तावत्

किन्तु कुत्रापि भवादृशीं परमसुन्दरीं तु न दृष्टवान् । इदानीम् अहं दीनावस्थायाम् अस्मि । विंशतिदिनानि यावत् समुद्रे प्रयाणं कृत्वा महता कष्टेन ह्यः एव अत्र प्राप्तवान् अस्मि । एषः प्रदेशः मम नूतनः । अतः भवत्या एव मम रक्षणं करणीयम् । मम परिस्थितिं ज्ञात्वा धर्तुम् एकं वस्त्रं दापयतु भवती । तथैव ग्राममार्गमपि दर्शयतु । शोचनीयावस्थायां स्थितस्य मम साहाय्यं कृतं चेत् पुण्यं लभ्यते भवत्या'' इति उक्तवान् ।

''स्वामिन् ! भवान् बुद्धिमान् इव दृश्यते । सुखं तावत् दैवानुग्रहात् एव प्राप्यते इति भवान् जानीयात् एव । कष्टं सुखं चापि समानतया एव स्वीकरणीयं जीवने । कष्टकाले कष्टस्य एव महत्त्वं भासेत । किन्तु तावता एव प्रमाणेन सुखम् अपि प्राप्यते एव । कस्य जीवने कष्टं कस्मिन् काले आपतिष्यति, कदा वा समाप्तिं गच्छति, सुखस्य आरम्भः कदा वा भविष्यति इति कोऽपि न जानाति । आस्तां तावत् सा कष्टसुखमीमांसा । इदानीं भवान् अस्माकं अतिथिः अस्ति । अतः अशनवसनार्थं कापि न्यूनता अत्र न भविष्यति । मम ग्रामं प्रति गमनस्य मार्गमपि प्रदर्शयामि अहम् । एषः फैयासियादेशः । महामेधाः एतस्य देशस्य राजा । अहं तस्य पुत्री'' इति उक्तवती वारुणी ।

ततः सा दासीः आहूय - ''किमर्थं तथा



भीत्या धावन्ति भवत्यः ? एषः अपायकारी तु सर्वथा न । एतस्य स्नानं कारयित्वा खादितुं किमपि यच्छन्तु'' इति आदिष्टवती ।

दास्यः रूपधराय स्नानस्थानं दर्शितवत्यः । रूपधरः नदीं गत्वा नदीजलेन सम्यक् स्नानं कृतवान् । तस्य शरीरे लग्नाः मृत्तिकापङ्कादयः स्नानेन अपगताः । तस्य स्नानानन्तरं दास्यः तस्मै शरीरे लेपनार्थं तैलं, धर्तुं वस्त्राणि च दत्तवत्यः । रूपधरः ताभिः दत्तानि वस्त्राणि धृत्वा सुवर्णविग्रहः इव कान्त्या प्रकाशमानः वारुण्याः समीपम् आगतवान् । पूर्वं तस्य दर्शनात् भीत्या धावितवत्यः दास्यः वारुणी च इदानीं तं स्वर्गलोकात् आगतवन्तं देवं भावितवत्यः ।



'मम पतिः एतादृशः एव स्यात् । एतादृशः मम देशे तिष्ठति चेत् उत्तमं भविष्यति' इति चिन्तितवती वारुणी ।

दास्यः भोजनं परिवेषितवत्यः । रूपधरः बहुदिनानाम् अनन्तरम् उत्तमं भोजनं कृतवान् ।

अत्रान्तरे वारुणी भविष्यस्य विषये चिन्तयन्ती आसीत् । सा प्राप्तवयस्का युवतिः आसीत् । तस्याः विवाहः न जातः आसीत् । तस्य देशस्य अनेके युवानः तां परिणेतुं सिद्धाः आसन् । किन्तु सा तान् सर्वान् निराकृतवती आसीत् । अतः सा चिन्तितवती यत् इदानीं मया सह स्वनगरं प्रति एतस्य रूपधरस्य नयनम् उचितं न भवेत् इति ।

'कश्चित् अनाथम् अज्ञातकुलगोत्रं विदेशीयं परिणीय गृहम् आनयन्ती अस्ति राजकुमारी इति जनाः चिन्तयेयुः । अतः मया सह एतस्य नयनं न उचितम् । रूपधरः स्वयं मम गृहम् आगत्य आतिथ्यं प्रार्थयति चेत् एव वरं भवेत्' इति निर्णीतवती वारुणी ।

दास्यः शुष्काणि वस्त्राणि पुटीकुर्वत्यः आसन् । तदा वारुणी रूपधरम् उद्दिश्य – ''वयं गच्छामः । भवान् इतरैः सह मम पृष्ठतः पादाभ्याम् आगच्छतु । एवं भवान् दुर्गस्य द्वारपर्यन्तम् आगन्तुं शक्नोति । किन्तु मया सह दुर्गं मा प्रविशतु । जनाः अन्यथा चिन्तयेयुः । नगरात् बहिः किञ्चन उद्यानम् अस्ति । भवान् तत्र विश्रान्तिसुखम् अनुभवतु । मम गृहगमनानन्तरं साक्षात् मम गृहम् आगच्छतु । मम गृहं तु लघुबालाः अपि प्रदर्शयितुम् अर्हन्ति । गृहप्राप्त्यनुक्षणं साक्षात् अन्तः प्रविशतु । तत्र मम मातापितरौ भवतः । भवान् निःसङ्कोचं मम मातरं विषयं निवेदयतु । भवता तत्र कुशलतापूर्वकं सम्भाषणं करणीयम्, आश्रयः प्रार्थनीयः च । सा अङ्गीकरोति चेत् भवान् यत् किमपि प्राप्तुं शक्नोति'' इति उक्त्वा शकटम् आरुह्य गर्दभान् प्रचोदितवती । सर्वे ताम् अनुसृतवन्तः ।

यदा उद्यानं सन्निहितं तदा रूपधरः तत्रैव स्थितवान् । अन्ये सर्वे अग्रे गतवन्तः । सूर्यास्तः जायमानः आसीत् । रूपधरः इष्टदेवतां बुद्धिमतीदेवीं भक्त्या ध्यायन्

राजगृहम् अन्विष्यन् अग्रे गतवान् ।

तावता वारुणी गृहं प्राप्तवती । तस्याः पञ्च अग्रजाः तया क्षालितानि वस्त्राणि अन्तः नीतवन्तः । चुल्ली ज्वालिता आसीत् । अतः पाकः आरब्धः स्यात् इति चिन्तितवती वारुणी ।

रूपधरः नगरं प्रविष्टवान् । अन्धकारः आसीत् इति कारणतः तं केऽपि न अभिज्ञातवन्तः । अत्रान्तरे काचित् बालिका जलघटं स्वीकृत्य रूपधरस्य अभिमुखम् आगतवती ।

रूपधरः तां बालिकाम् उद्दिश्य - "भगिनि, अहं कश्चित् वैदेशिकः । महामेघोराजस्य गृहं प्रति गमनार्थं मार्गं कृपया दर्शयतु" इति प्रार्थितवान् ।

"अहमेव मार्गं प्रदर्शयामि । आगच्छतु तावत् । भवता अत्रत्याः एवं न प्रष्टव्याः । यतः विदेशीयानां विषये महान् सन्देहः अत्रत्यानाम् । अतः अन्यत्र कुत्रापि अपश्यन् निश्चिन्ततया माम् अनुसरतु" इति उक्तवती बालिका ।

ताम् अनुसरन् राजभवनं प्राप्तवान् रूपधरः । तत् भवनम् अपूर्वम् आसीत् । रूपधरः अन्तः प्रवेष्टुं सङ्कोचम् अनुभूतवान् । किञ्चित्कालं यावत् सः तत्रैव स्थित्वा अवलोकनं कृतवान् । पञ्जिकानां प्रकाशे कार्यं कुर्वाणाः कर्मकराः, विशाला फलवाटिका च तेन दृष्टा । अन्ते कथञ्चित् धैर्यं प्राप्य अन्तः प्रविष्टवान् रूपधरः । वारुण्याः सूचनानुगुणं साक्षात् अन्तः



गतवान् सः । अन्तः विशाले स्थले केचन नगरस्य गण्याः भोजनार्थम् उपविष्टवन्तः आसन् ।

रूपधरः किञ्चित् अग्रे गत्वा महाराजं राज्ञीं च दृष्टवान् । राजराज्ञ्योः पादमूले जानुना उपविशन् सः महाराज्ञीम् उद्दिश्य - "महाराज्ञि, अहं कश्चित् दौर्भाग्यशाली । दैवविकोपात् मम नौका समुद्रे भग्ना । शरणागतः सन् अत्र आगतवान् अस्मि । भवत्या मम स्वदेशगमनाय साहाय्यं करणीयम्" इति प्रार्थितवान् ।

तस्य वचनं श्रुत्वा सर्वे चकिताः अभवन् । अन्ते कश्चित् वृद्धः उत्थाय महामेघसम् उद्दिश्य - "महाराज, अस्माकम् अतिथिरूपेण यः आगतवान्



अस्ति तस्य भूमौ उपवेशनं न युक्तम् । अतः भवान् एनं स्वयम् आसन्दे उपवेश्य सहभोजनम् आयोजयतु'' इति उक्तवान् ।

तदा महामेधाः उत्थाय आदरपूर्वकं रूपधरं स्वागतीकृत्य स्वस्य पार्श्वे उपवेशितवान् । अनन्तरं सर्वे मिलित्वा भोजनं कृतवन्तः ।

भोजनानन्तरं महामेधाः उत्थाय गण्यान् उद्दिश्य - ''भवतां भोजनं समाप्तम् अस्ति खलु ! अतः भवन्तः विश्रान्तिम् अनुभवितुम् अर्हन्ति । वयं सर्वे श्वः एतस्य मनोरञ्जनार्थं कार्यक्रमम् आयोजयिष्यामः । तदनन्तरम् एतस्य प्रवासविषये चिन्तयिष्यामः । एतस्य देशः सुदूरे स्यात् नाम । तथापि एषः सकुशलं प्रयाणं यथा कुर्यात् तथा करणम् अस्माकं दायित्वम् । सर्वविधसाहाय्यं कृत्वा वयं शुभम् एव आशंसामः चेदपि कदाचित् अग्रे कष्टानि सोढव्यानि यदि भवेयुः तर्हि न वयं किमपि प्रतिकर्तुं शक्नुमः । यत् भवितव्यम् अस्ति तत् भविष्यति एव । न जाने, कदाचित् एषः मानवरूपेण आगतः देवः अपि भवितुम् अर्हति । देवाः तदा तदा नररूपेण आगत्य अस्माभिः सह भोजनादिकं यत् कुर्वन्ति तत् भवद्भिः ज्ञातम् एव अस्ति'' इति उक्तवान् ।

एतत् श्रुत्वा रूपधरः - ''महाराज, भवन्तः एवं मा चिन्तयन्तु । अहं देवः न, अपि तु सामान्यः मानवः एव अस्मि । मया अनुभूता नरकयातना वर्णयितुम् अशक्या अस्ति । यदि अहं देवः देवांशसम्भूतः वा स्यां तर्हि एतादृशानि घोराणि कष्टानि मया सम्मुखीकरणीयानि न अभविष्यन् । वस्तुतः अहं दैवविकोपपात्रीभूतः मानवः अस्मि । अतः एव देवाः मम जीवने अनन्तानि कष्टानि उत्पादितवन्तः । न जाने, एषा कष्टपरम्परा कदा समाप्ता भविष्यति इति । अतः इदानीं भवन्तः वा कष्टेभ्यः विमोचनं प्राप्तुं मम साहाय्यं कुर्वन्तु । मम एका एव अपेक्षा अस्ति यत् स्वजनान् दृष्ट्वा एव मरणं प्राप्तव्यम् इति'' इति दुःखमिश्रितेन स्वरेण उक्तवान् ।

रूपधरस्य वचनं श्रुत्वा सर्वे अपि तस्य विषये अनुकम्पं प्रदर्शितवन्तः । ततः सर्वेषां गमनानन्तरं तत्र केवलं राजा राज्ञी च आस्ताम् । तदा राज्ञी रूपधरं पश्यन्ती तेन

धृतानि वस्त्राणि अभिज्ञातवती । तानि राज्ञ्या एव सीवितानि आसन् ।

सा रूपधरम् उद्दिश्य - "किं भोः, अहं कांश्चन प्रश्नान् प्रक्ष्यामि । भवता विस्तरेण उत्तरं वक्तव्यम् । भवान् कः ? कुतः आगतवान् ? समुद्रे प्रयाणं कृत्वा किमर्थं भवान् कष्टम् अनुभूतवान् ?" इति पृष्टवती ।

तदा रूपधरः सम्मोहिन्याः जाले पतनं, ततः मोक्षप्राप्तिं, समुद्रे प्राप्तां कष्टपरम्परां, ततः एतद्द्वीपस्य तीरे पतनम् इत्यादिकं विस्तरेण उक्तवान् । वारुण्या कृतं साहाय्यम् अपि उक्तवान् सः ।

सर्वं श्रुत्वा महामेधाः - "मम पुत्री अज्ञानेन भीत्या वा दोषम् आचरितवती । सा साक्षात् भवन्तम् आनेतुम् अशक्ष्यत्" इति उक्तवान् ।

"महाराज, तां मा निन्दतु । निरपराधिनी सा । सा मां पृष्ठतः आगन्तुं सूचितवती आसीत् । किन्तु अहमेव नूतनं वातावरणं दृष्ट्वा तथा कर्तुं न इष्टवान्" इति उक्तवान् रूपधरः ।

"भवान् मम पुत्रीं परिणीय अत्रैव स्थातुम् इच्छति चेत् आनन्दः एव । तदर्थं भवान् सङ्कोचं मा अनुभवतु । अद्य तु एतावता एव महान् विलम्बः जातः अस्ति । अतः इदानीं निद्रां करोतु भवान् । श्वः अपि भवान् यावत् इच्छति तावत् भवतः विश्रान्तिः अनुवर्ततां नाम । विश्रान्तिसमाप्तेः अनन्तरम् आवां वार्तालापं करवाव । वार्तालापस्य अनन्तरम् अपि त्वरया स्वदेशगमनम् एव वरम् इति यदि भवान् चिन्तयिष्यति तर्हि अहं भवतः प्रवासस्य व्यवस्थां कल्पयित्वा प्रापणव्यवस्थां चिन्तयिष्यामि । अस्माकं नौकासदृशाः नौकाः, नाविकसदृशाः नाविकाः च जगति कुत्रापि न लभ्येरन्" इति उक्तवान् महामेधाः ।

तयोः सम्भाषणसमये रूपधरस्य शयनार्थं मञ्चस्य व्यवस्थां कृतवती आसीत् राज्ञी । रूपधरः स्वस्य कष्टानि विस्मृत्य मंञ्चे सुखेन शयनं कृतवान् । (अनुवर्तते)



# प्रतिवेशिनां साहाय्यम्

ग्रीष्मकाले कदाचित् भरतपुरस्थे कस्मिंश्चित् कुटीरे अग्निः संलग्नः । अग्निं दृष्ट्वा भीताः ग्रामीणाः केचन कूपात् जलम् उद्धर्तुम् उद्युक्ताः अभवन् । अन्ये केचन कूपात् उद्धृतं जलं कुटीरस्य उपरि पातयन्तः अग्निनिवारणे प्रयत्नम् अकुर्वन् । पुनः केचन समीपस्थायाः नदीतः जलम् आनीय अग्निनिर्वापणे प्रयत्नम् आरब्धवन्तः ।

एवं सर्वेषु ग्रामीणेषु अग्निनिवारणार्थं विविधप्रयत्नान् कुर्वत्सु, सिंहाद्रिः नाम कश्चित् अनतिदूरे स्थितस्य वृक्षस्य अधः उपविश्य मन्दस्वरेण गानं कुर्वन् आसीत् । तदा तत्र आगतः पार्श्वग्रामीणः कश्चित् सिंहाद्रेः व्यवहारं दृष्ट्वा आश्चर्यम् अनुभवन् पृष्टवान् - "किं रे, विचित्रः व्यवहारः भवतः ! ग्रामीणाः सर्वे अग्निनिवारणे प्रयत्नं कुर्वन्तः सन्ति । भवान् तु सुखेन अत्र उपविष्टः अस्ति !!" इति ।

तदा सिंहाद्रिः उक्तवान् - "अग्निना दह्यमानं कुटीरं मम एव । कुटीरे यद्यत् आसीत् तत्सर्वम् अग्निसाज्जातम् अस्ति । इतःपरं किं परिश्रमेण ? तत्र अग्निनिवारणे ये निरताः दृश्यन्ते ते इतःपूर्वं मया बहुधा प्रार्थितं चेदपि अल्पं साहाय्यम् अपि न कृतवन्तः । इदानीम् अपि ते मम साहाय्यं कुर्वन्तः न सन्ति" इति ।

"किम् एतत् वचनं भवतः ? अग्निनिवारणं ते यत् कुर्वन्तः सन्ति सः किं परोपकारः न ?" इति आश्चर्येण पृष्टवान् पार्श्वग्रामीणः ।

"सर्वथा न । अग्निप्रसारः यथा न भवेत् तथा कुर्वन्तः स्वगृहादीनां रक्षणे निरताः सन्ति एते प्रतिवेशिनः । परोपकारः अत्र लेशतः अपि नास्ति" इति उक्तवान् सिंहाद्रिः ।






# कल्पनासुन्दरी

साहसकार्यकरणम् एव जीवनस्य लक्ष्य मन्यमानः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्, ततः मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! अस्मिन् भयङ्करे अन्धकारे श्मशाने क्षुद्रजीविनः सञ्चरन्ति । एतादृशस्थले भवान् यत् कष्टम् अनुभवन् अस्ति तत् दृष्टवतः मम मनसि करुणा उत्पन्ना भवति । तेनैव सह कश्चन संशयः अपि उत्पद्यते । सः च - 'अस्मिन् जगति स्थितेषु मानवेषु सर्वरीत्या अत्युन्नतस्थितिं प्राप्तवान् अद्वितीयः स्थितप्रज्ञः स्यात् वा भवान्' इति । तत् आस्तां तावत् । अपूर्वः अलौकिकः अनुभवः कदाचित् मानवेषु दुःखं जनयति । उदाहरणार्थम् अहं देवसिंहनामकस्य युवकस्य कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

# वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं कस्मिंश्चित् देशे देवशर्मा नाम कश्चित् युवकः आसीत् । सः राजवंशीयः सुन्दरः च आसीत् । विवाहवयः जातं चेदपि सः यां कामपि कन्यां न अङ्गीकरोति स्म । यतः तस्य मनसि कस्याश्चित् सुन्दर्याः कल्पना आसीत् । तादृश्याः सुन्दर्याः अन्वेषणं सः करोति स्म ।

हिमालयपर्वतप्रान्ते विद्यमानं सरोवरं स्नानार्थं काश्चित् गन्धर्वकन्याः आगच्छन्ति इति देवशर्मा श्रुतवान् आसीत् । मार्गमध्ये अरण्ये क्रूरप्राणिनः सन्ति इति कारणतः केऽपि तत्र न गच्छन्ति स्म । परन्तु देवशर्मा प्राणापायम् अपि अविगणय्य कल्पना-सुन्दरीम् अन्विष्यन् सरोवरस्य समीपम् आगतवान् ।

तच्च सरोवरं कस्यचित् गन्धर्वराजस्य आसीत् । सरोवरं प्रति तस्य पुत्र्यः जलक्रीडार्थम् आगच्छन्ति स्म । तासु मनोरमानामिकां गन्धर्वकन्यां देवशर्मा दृष्टवान् । तस्याः दर्शनस्य अनुक्षणमेव देवशर्मा चिन्तितवान् यत् एषा एव मम कल्पनासुन्दरी इति । तस्याः समीपं गत्वा देवशर्मा स्वमनोभिलाषं वक्तुं यावत् उद्युक्तः अभवत्, तावता सा सरोवरे निमग्ना सती अदृश्या अभवत् ।

परन्तु देवशर्मा एतेन अल्पाम् अपि निराशाम् अप्राप्नुवन् सरोवरसमीपे एव स्थितवान् । एकमासानन्तरं मनोरमा पुनः तेन दृष्टा । इदानीं सः एकस्य वृक्षस्य पृष्ठतः निलीय तिष्ठन्, यदा सा समीपम् आगता तदा हठात् तस्याः हस्तं गृहीतवान् । परन्तु मनोरमा कथञ्चित् देवशर्मतः आत्मनः विमोचनं संसाध्य ततः सरोवरे अदृश्या अभवत् ।

यदा ताम् अनुसृत्य गतः देवशर्मा सरोवरस्य अन्तः गन्तुम् उद्युक्तः, तदा 'तिष्ठतु' इति गम्भीरस्वरः कश्चन श्रुतः । अनन्तरक्षणे गन्धर्वराजः तिसृभिः स्वपुत्रीभिः सह सरोवरात् बहिः आगतवान् । ताः तिस्रः अपि दर्शनेन समानरूपिण्यः आसन् । सः गन्धर्वराजः देवशर्माणम् उक्तवान् - ''एताः तिस्रः अपि मम पुत्र्यः एव । एतासु यस्यां भवतः अनुरागः अस्ति तां यदि भवान् अभिज्ञातुं

शक्नुयात् तर्हि अहं तां भवते दास्यामि'' इति ।

देवशर्मा तिस्रः अपि तदेकदृष्ट्या वीक्षितवान् । 'एतासु तिसृषु पूर्वं का दृष्टा' इति तेन सर्वथा न अवगतम् । तावति काले तस्य मनसि कश्चन उपायः स्फुरितः । 'गुल्मान्तरितः अहम् एतासु कस्याश्चित् हस्तं गृहीतवान् आसम् । मम ग्रहणं दृढम् आसीत् । यद्यपि सा तदा मम ग्रहणात् आत्मानं विमोच्य गतवती, तथापि तस्याः हस्ते इदानीम् अपि ग्रहणसूचकं चिह्नं किमपि स्यात् एव । हस्ते तत् ग्रहणचिह्नम् अभिज्ञातं चेत् मदनुरागपात्रीभूता अभिज्ञाता भविष्यति' इति सः चिन्तितवान् । अतः सः एकैकस्याः अपि हस्तं परिशीलितवान् । तासु एकस्याः हस्तस्य चर्म किञ्चित् रक्तवर्णं सत् कान्तिहीनम् आसीत् । तदा देवशर्मा अनुरागपात्रभूतां ताम् अभिजानन् तां कन्यां गन्धर्वराजाय दर्शितवान् ।

तदा गन्धर्वराजः सन्तोषेण - ''भवान् सम्यक् मनोरमायाः अभिज्ञानं प्राप्तवान् । मनोरमायाः अपि भवान् प्रियः एव । अतः भवतोः विवाहः अनुमन्यते मया । परन्तु एकः नियमः यत् सर्वदा एतस्याः विषये भवान् शान्तः एव भवेत् । यदाकदाचित् अपि एतस्य नियमस्य भङ्गः न भवेत् । कदाचित् भवान् कोपं कृत्वा एतां त्रिवारं ताडयिष्यति चेत् एषा भवन्तं त्यक्त्वा गन्धर्वलोकम् आगमिष्यति । यावत् भवान् नियमं पालयिष्यति तावत् मनोरमा भवतः



समीपे स्थास्यति'' इति उक्त्वा मनोरमां तत्रैव त्यक्त्वा द्वाभ्यां पुत्रीभ्यां सह ततः अदृश्यः अभवत् ।

लज्जया शिरः अवनमय्य स्थितवतीं मनोरमां तत्रैव गान्धर्वविधिना परिणीय स्वनगरम् आनीतवान् देवशर्मा ।

केषाञ्चित् दिनानाम् अनन्तरं देवशर्मा स्वपत्न्या सह आत्मीयस्य मित्रस्य गृहं गतवान् । मित्रस्य पुत्रस्य नामकरणदिनम् आसीत् तत् । सर्वे बान्धवाः तत्र आगताः आसन् । देवशर्मा आत्मना आनीतम् उपायनं शिशवे दत्तवान् । ततः सः शिशुम् उन्नीय पत्न्यै दातुम् उद्युक्तः । तदा मनोरमा शिशुम् उपेक्षया पश्यन्ती वेगेन ततः निर्गतवती । तत्रत्याः सर्वे जनाः देवशर्मा च



तस्याः एतं व्यवहारं दृष्ट्वा नितराम् आश्चर्यचकिताः ।

गृहं प्रति आगमनानन्तरं देवशर्मा कोपेन पत्नीं पृष्टवान् - ''मम मित्रस्य गृहे भवती शिशुं दृष्ट्वा किमर्थं तथा कृतवती ?'' इति ।

''तं शिशुम् उन्नेतुम् अहं न इष्टवती'' इति उक्तवती मनोरमा ।

तदा देवशर्मा पृष्टवान् - ''तदेव अहं पृच्छन् अस्मि - किमर्थं तथा कृतवती इति ?'' इति ।

''कारणं तु न वदामि'' इति उक्तवती मनोरमा । अनुक्षणमेव देवशर्मा तां कपोले ताडितवान् । तदा मनोरमायाः नेत्राभ्याम् अश्रूणि पतितानि ।

रुदती एव सा पतिं देवशर्माणम् उक्तवती - ''तं शिशुं दृष्ट्वा अहं ज्ञातवती यत् सः शिशुः यदा ज्येष्ठः भविष्यति तदा बहुजनानां हननं करिष्यति इति । तादृशम् अहं स्प्रष्टुं न इष्टवती । अतः भवान् कोपेन मां ताडितवान् । एतत् प्रथमं ताडनम्'' इति ।

देवशर्मा स्वदोषं ज्ञातवान् । इतःपरं जागरूकतया व्यवहरणीयम् इति सः निश्चितवान् । तदनुगुणम् एव व्यवहारम् आरब्धवान् च ।

एतस्याः घटनायाः मासात् अनन्तरं नगरपालकस्य पुत्र्याः विवाहनिमित्तं देवशर्मा मनोरमा च गतवन्तौ । नगरपालकः तौ द्वौ अपि आदराभिमानेन आहूय कल्याणमण्डपसमीपं नीतवान् । यदा वरः वध्वाः कण्ठे माङ्गल्यसूत्रं बन्धुम् उद्युक्तः तदा मनोरमा उच्चध्वनिना रोदनम् आरब्धवती । तत्र सम्मिलिताः सर्वे जनाः तां कुतूहलेन दृष्टवन्तः ।

तदा देवशर्मा लज्जाम् अनुभवन् मृदुस्वरेण पत्नीं पृष्टवान् - ''किमर्थं रोदनं करोति भवती ?'' इति ।

''किं वदामि ? तौ वधूवरौ वैरिणौ । विवाहानन्तरं तौ मिलित्वा न जीविष्यतः । सर्वदा कलहं करिष्यतः । एतयोः जीवनं यातनामयं भविष्यति'' इति उक्त्वा मनोरमा रोदनम् अवरोद्धुं प्रयत्नं कृतवती ।

तस्याः वचनं श्रुतवान् कश्चित् पार्श्वे विद्यमानम् अपरम् उक्तवान् - ''पश्यतु, पत्न्याः नियन्त्रणं कर्तुं पतिः असमर्थः

अस्ति'' इति ।

तत् वचनं श्रुत्वा देवशर्मा कोपेन मनोरमायाः भुजं कम्पयन् - ''भवत्याः रोदनं स्थगयतु'' इति उक्तवान् ।

तदा मनोरमा व्यथाम् अनुभवन्ती - ''पश्यतु, भवान् द्वितीयवारं मां तर्जयन् अस्ति । एतत् भवान् स्मरतु'' इति उक्त्वा वेगेन ततः निर्गतवती ।

एतदनन्तरं देवशर्मा अधिक-जागरूकतया पत्नीं पश्यन् आसीत् । कस्याश्चित् अपि परिस्थितौ सः पत्नीं विहाय न भवति स्म ।

केषाञ्चित् दिनानाम् अनन्तरं देवशर्मणः पितृव्यस्य पुत्रः मृतः । तदा देवशर्मा मनोरमा च तत्र गतवन्तौ । यः मृतः तस्य पत्नी उच्चध्वनिना रोदनं कुर्वती आसीत् । तत् दृष्ट्वा अन्ये मनसि एव दुःखम् अनुभवन्ति स्म ।

तस्यां दुःखपरिस्थित्यां मनोरमा उच्चैः हसितवती । सर्वे तां विचित्रदृष्ट्या दृष्टवन्तः ।

तदा देवशर्मा मन्दस्वरेण तां सूचितवान् - ''एवं मा हसतु । सर्वे रोदनं कुर्वन्तः सन्ति'' इति ।

तथापि सा हासस्य निग्रहणं कर्तुं न शक्तवती । एतत् दृष्ट्वा नितरां खिन्नः देवशर्मा कोपेन तां ताडितवान् ।

अनुक्षणमेव मनोरमा रोदनं स्थगयित्वा - ''यः मृतः सः अदृष्टवान् । यतः एतावति काले एव सः चक्रवर्तिनः पुत्रः सन् पुनर्जन्म



प्राप्तवान् अस्ति । तत् अज्ञात्वा एते सर्वे रोदनं कुर्वन्तः सन्ति । अतः मम हासः आगतः । तत् भवतु नाम । भवान् तु इदानीं मम पितुः वचनस्य भङ्गं कृतवान् । अतः भवता सह न जीवामि'' इति देवशर्माणम् उक्त्वा ततः प्रस्थितवती । ताम् अवरोद्धुं देवशर्मा प्रयत्नमेव न कृतवान् । तथा एव निर्लिप्तः सन् स्थितवान् आसीत् ।

वेतालः एवं कथां समाप्य - ''हे राजन् ! अत्र यत् प्रवृत्तं तस्मिन् मम बहवः संशयाः सन्ति । देवशर्मा किमर्थं गन्धर्वराजस्य वचनम् उल्लङ्घितवान् ? 'येन केनचित् वा कारणेन यदि त्रिवारं भवता ताड्येत तर्हि एषा भवन्तं त्यक्त्वा गमिष्यति' इति गन्धर्वराजेन उक्तम् आसीत् । एतत्

वचनं सम्यक् स्मरति स्म देवशर्मा । तथापि सः तां त्रिषु सन्दर्भेषु ताडितवान् । किम् एतत् बुद्ध्या कृतम्, उत कोपवशात् ? किमर्थं सः मनोरमायै गमनार्थम् अवकाशं दत्तवान् ? तस्यां विद्यमाना प्रीतिः न्यूना जाता किम् ? मनोरमा अपि देवशर्मणि अनुरागवती आसीत् । तथापि सा किमर्थं देवशर्मणः त्यागे मतिं कृतवती ? किम् अविवेकिनी सा ? यदि एतेषां सन्देहानाम् उत्तरं भवान् जानन् अपि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति'' इति अवदत् ।

तदा त्रिविक्रमः उक्तवान् - ''मानव-गन्धर्वयोः मध्ये यः विवाहः प्रचलति सः धर्मविरुद्धः अस्ति । देवशर्मणः मनोरमायां विद्यमाना प्रीतिः न्यूना न जाता । परन्तु सः स्वस्य मानवस्वभावं परिवर्तयितुं न शक्तवान् । तथा च मनोरमायाः मनस्तत्त्वमपि न परिवर्तितम् । तयोः द्वयोः स्वभावे विद्यमानः भेदः तयोः व्यवहारेण ज्ञातः । देवधर्मं मानवः आचरितुं न शक्नोति । सः सञ्जीवी । केवलं स्त्रीषु विद्यमानया प्रीत्या मानवजीवनस्य परिपूर्णता न भवति । देवशर्मा यदा पत्नीं त्रिवारं ताडितवान् तदा- 'समकालीनाः सञ्जीविनः किं चिन्तयन्ति' इति चिन्तितवान्, न तु मनोरमायाः पितुः नियमं स्मृतवान् । तथा च मनोरमा स्वस्मिन् विद्यमानया असाधारण्या शक्त्या अन्येषां भविष्यं ज्ञात्वा स्वेच्छया व्यवहृतवती । मानवानाम् आचारविचारविषये न सा चिन्तितवती एव । एतादृशं सूक्ष्मविचारं देवशर्मा ज्ञात्वा तस्यां विद्यमानां प्रीतिं न्यूनीकृतवान् । अपि च सा कदाचित् स्वस्मात् दूरं गमिष्यति इति कठोरसत्यं सः अनुभवबलात् ज्ञातवान् आसीत् एव । अतः एव सः मनोरमायाः गमनं न अवरुद्धवान्'' इति ।

एवं वदतः राज्ञः मौनभङ्गः यदा जातः तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।





# योगिनः उपदेशः

जयसुन्दरः नाम कश्चित् ग्रामप्रमुखस्य कार्यालये उद्योगं प्राप्तवान् । ततः अचिरात् तस्य विवाहः अपि अभवत् । तस्य पत्न्याः नाम कमला इति ।

पार्श्वगृहस्थानां धनिकत्वं दृष्ट्वा कमला असूयाम् असन्तोषं च प्राप्नोति स्म । अतः सा - "वस्त्राणि आभरणानि च आनीय ददातु" इति सदा पतिं पीडयति स्म ।

पत्न्याः एतादृशपीडायाः कारणतः जयसुन्दरः कार्यालये श्रद्धया कार्यं कर्तुं न शक्तवान् । सर्वदा अन्यमनस्कः एव भवति स्म सः । अतः ग्रामप्रमुखः तम् उद्योगात् निष्कासितवान् ।

अस्मिन् समये तं ग्रामं चिदानन्दनामकः कश्चित् योगी आगतवान् । तस्य महिमा सर्वत्र प्रसृतः आसीत् । एकस्मिन् दिने सायङ्काले जयसुन्दरः योगिनं दृष्ट्वा साष्टाङ्गं प्रणम्य - "स्वामिन् ! मम पत्नी मां बहुधा पीडयति । अतः मम जीवने विरक्तिः उत्पन्ना अस्ति । योगिनः मोक्षं दातुम्, अपेक्षितं जन्म दातुं चापि समर्थाः भवन्ति इति श्रूयते । अतः मह्यं मानवेतरत् किमपि जन्म ददातु कृपया" इति प्रार्थितवान् ।

तदा योगी हसन् - "पुत्र ! भवान् कीदृशं जन्म इच्छति ?" इति पृष्टवान् ।

तत्समये कस्माच्चित् वृक्षात् पुष्पाणि तयोः उपरि पतितानि । जयसुन्दरः सुगन्धयुक्तानि तानि पुष्पाणि पश्यन् - "स्वामिन् ! अहं पुष्पजन्म इच्छामि" इति उक्तवान् ।

तदा योगी जयसुन्दरस्य ललाटे अङ्गुल्या किमपि लिखितवान् । तत्क्षणे जयसुन्दरः पुष्परूपेण परिवर्तितः अभवत् । एतेन आत्मनः जीवनं स्मरन् जयसुन्दरः यद्यपि क्षणकालम् आनन्दितः अभवत्, तथापि अपरक्षणे एव तस्य मनसि केचन विचाराः

उत्पन्नाः अभवन् । 'अहं यस्मिन् वृक्षे अस्मि सः शुष्कः भवति चेत्, काचित् बालिका माम् अवचित्य मालां कृत्वा एकदिनानन्तरं मार्गे क्षिपति चेत् वा मम निश्चयेन कष्टं भवेत्' इत्येवं विविधाः विचाराः तस्य मनसि उत्पन्नाः । तदा सः भीतः अभवत् ।

तस्मिन् एव क्षणे पार्श्वस्थायां शाखायां स्थितः कपोतः स्वस्य पक्षं चालितवान् । तदा जयसुन्दरः अनुक्षणं - ''स्वामिन् ! मम पुष्पस्य जन्म मास्तु । पक्षिजन्म ददातु'' इति प्रार्थितवान् ।

योगी 'तथास्तु' इति उक्तवान् । अपरक्षणे एव कपोतः सन् प्लवमानः सः वृक्षस्य उपरि गत्वा उपविष्टवान् । तस्मिन् समये तत्र आगतः एकः व्याधः तमुद्दिश्य एकं शरं प्रयुक्तवान् । परन्तु स च शरः लक्ष्यच्युतः अभवत् । अतः कपोतरूपी जयसुन्दरः बाधितः न अभवत् । एतस्मात् भयग्रस्तः जयसुन्दरः उच्चैः आक्रोशं कुर्वन् योगिनः समीपम् आगत्य - ''स्वामिन् ! एतत् पक्षिजन्म अपि मास्तु । मह्यम् अजस्य मेषस्य वा जन्म ददातु'' इति प्रार्थितवान् ।

तत् श्रुत्वा योगी जयसुन्दरस्य स्कन्धे हस्तं प्रसार्य - ''पुत्र ! अजरूपेण मेषरूपेण वा स्थितवन्तं भवन्तं दुष्टाः मारयितुम् अर्हन्ति खलु !'' इति उक्तवान् ।

तदा जयसुन्दरः योगिनं - ''स्वामिन् ! मां पुनः मनुष्यं करोतु'' इति प्रार्थितवान् ।

एतत् श्रुत्वा तृप्तः योगी जयसुन्दरं स्पृशन् - ''पुत्र ! अहं भवन्तं पुष्परूपेण कपोतरूपेण वा न परिवर्तितवान् । तथा कर्तुं मम शक्तिः नास्ति अपि । तत्तज्जन्मनः अनुभूतिः भवतः यथा भवेत् तथा केवलम् अहं कृतवान् । इतःपरं वा भवान् जीवनं वास्तविकदृष्ट्या पश्यन् जीवतु । भवान् सहनया धैर्येण च व्यवहरतु । चतुरोपायैः पत्न्याः स्वभावं परिवर्तयन् । श्रद्धया, प्रामाणिकतया, आसक्त्या च कार्यं करोतु । तदा भवन्तं कोऽपि उद्योगतः न निष्कासयिष्यति'' इति उपदिष्टवान् ।

जयसुन्दरः नूतनं जीवनोत्साहं प्राप्य योगिनं नमस्कृत्य ततः गृहं गतवान् ।



# मुम्बयीमहानगरी

आलेखः - मीरा नायर्
चित्रम् - गौतमसेनः


राजा चार्ल्स् द्वितीयः


राजकुमारी केथरिन् डाब्रागाञ्जा

पञ्चशतवर्षेभ्यः पूर्वं पोर्चुगीस्-जनाः यदा भारतम् आगतवन्तः तदा इदानीन्तनं 'मुम्बयी' सप्तद्वीपैः युक्तः प्रदेशः आसीत् । तत्र लघु लघु ग्रामाः आसन् । पोर्चुगीस्राजकुमारी काथरिन् डाब्रागाञ्जा यदा इङ्गलेण्डराजकुमारं द्वितीयचार्ल्सवर्यं वृतवती तदा उपायनरूपेण पोर्चुगीसाः 'मुम्बयी'नामकं द्वीपं राजकुमाराय दत्तवन्तः । अन्यान् द्वीपान् अपि इङ्ग्लेण्ड-देशस्य अधीनान् कृतवन्तः पोर्चुगीसाः । कालक्रमेण सेतुद्वारा एतेषां सप्तानां द्वीपानां सम्पर्कः कल्पितः अभवत् । इदानीं महता प्रमाणेन अभिवृद्धिं गतम् इदं नगरं भारतस्य प्रमुखवाणिज्यकेन्द्ररूपेण अस्ति । मुम्बयीनगरस्य ६४ किलोमीटर्परिमितः समुद्रतीरप्रदेशः अस्ति । एतस्य नगरस्य वायव्यदिशि 'येर्सोवा'नामकं वासस्थानम् अस्ति । एतत्प्रदेशे मूलनिवासिनः कोळीजनाः अत्र अधिकसंख्यया दृश्यन्ते । एतत्कुलीयाः पुरुषाः समुद्रात् मत्स्यान् गृहीत्वा आनयन्ति । स्त्रियः नौकातः मत्स्यानाम् अवतारणे, मत्स्यानां विक्रयणे च साहाय्यं कुर्वन्ति । कोळीजनैः आनीयमानानां 'बाम्बिल्' 'बोम्बेडर्' इत्येतयोः मत्स्यजातिविशेषयोः मूल्यम् अत्यधिकं भवति । पेसोवृतः द्विकिलोमीटर्दूरे 'जुहू'नाम्ना प्रख्यातः समूद्रतीरप्रदेशः अस्ति । विविधैः आपणैः एषः प्रदेशः शोभते । अत्रत्यम् अत्यन्तं प्रसिद्धं रुचिकरं च खाद्यमस्ति 'भेलूपूरी' । ऐदम्प्राथम्येन भारते १९३२ तमे वर्षे श्री जे. आर्. डी. टाटावर्येण स्वस्य पस्मोत्विमानेन जूहूतीरे


मुम्बयीमूलाः सप्त द्वीपाः


टाटाद्वारानिर्मितं पस्मोत्-विमानम्


जमशेटजी टाटा

अवतीर्य वैमानिकेतिहासस्य शुभारम्भः कृतः । अस्मदीयायाः एयर् इण्डिया विमानसंस्थायाः आविष्कारस्य प्रधानं कारणम् एषा घटना अभवत् । एतस्य समुद्रतीरस्य दक्षिणप्रदेशे एकस्मिन् शिखरे 'मौण्ट् मेरी - आलयः' अस्ति । १६४० तमे वर्षे पोर्चुगीसाः एतम् आलयं निर्मितवन्तः । सप्टम्बरमासे अत्र यदा उत्सवः प्रचलति तदा विविधमतीयाः प्रजाः अत्र आगत्य मेरीमातुः पुरतः सिक्थवर्तिकां ज्वालयन्ति ।

*मौण्ट्मेरी-क्रैस्तमन्दिरम्*

समुद्रे स्थिते वरळीद्वीपे अष्टशतवर्षेभ्यः प्राक् निर्मितं 'हाजी आली दर्गा' इति ख्यातं यवनप्रार्थनामन्दिरम् अस्ति । समुद्रे यदा तरङ्गाः न्यूनाः भवन्ति तदा एव तत्र गन्तुं शक्यते । तत्र पीरहाजी हस्रत् बुखारीवर्यस्य स्मारकम् अस्ति । कस्मिंश्चित् काले अत्यन्तं धनिकः वणिक् आसीत् हाजी आली । यदा सः मेक्कायात्रार्थं प्रस्थितवान् तदा स्वीयां सम्पदं दीनदरिद्रेभ्यः वितीर्णवान् इति श्रूयते । मेक्कातः यदा सः प्रत्यागतवान् तदा एतस्मिन् द्वीपे कस्याश्चित् महाशिलायाः उपरि वसन् आध्यात्मिकचिन्तनम् आरब्धवान् । तस्य मरणानन्तरं तदीयाः अनुचराः स्मारक-चिह्नमेकं निर्माय 'हाजी आली दर्गा' इति नामकरणं कृतवन्तः ।

*हाजी-आलि-यवनमन्दिरम्*

'जूहू बीच्' इव मलबार्पर्वतसमीपे स्थितः 'चौपाटी-समुद्रतीरप्रदेशः अपि विमानयानसम्बद्धः अस्ति । शतवर्षेभ्यः पूर्वं शिवशङ्कर बापूजी तालपडे (कश्चित् पण्डितः) इत्येषः चौपाटीसमुद्रतीरे विमानं चालितवान् इति श्रूयते । रैट्सहोदराभ्यां प्रथमवारं विमानयानस्य उड्डयनं कारितम् आसीत् इति यत् वदन्ति ततोऽपि अष्टवर्षेभ्यः पूर्वमेव एषा घटना संवृत्ता आसीत् इति वार्ता । इतरतीरेषु इव चौपाटीतीरप्रदेशे अपि प्रवर्तमानः गणेशविग्रहाणां विसर्जनकार्यक्रमः अत्यन्तं सुन्दरः । अत्र सर्वविधगणेशविग्रहाणां विसर्जनं समुद्रे कुर्वन्ति । बालगङ्गाधरतिलकमहोदयेन एतस्य उत्सवस्य प्रामुख्यं कल्पितम् । चौपाटीतीरे एव तिलकमहोदयस्य अन्त्यसंस्कारः कृतः आसीत् । तत्र तिलकमहोदयस्य कांस्यप्रतिमा प्रतिष्ठापिता अस्ति । भारतस्य

*विसर्जनात् पूर्वं गणपतेः शोभायात्रा*

स्वातन्त्र्यान्दोलने 'मुम्बयी'नगरस्य विशिष्टं स्थानम् अस्ति । अत्र एव भारतीयकाङ्ग्रेस्पक्षस्य सस्थापनम् अभवत् । १९४२ तमे वर्षे अगष्ट्मासे अष्टमे दिनाङ्के काङ्ग्रेस्पक्षेण ''क्विट् इण्डिया'' आन्दोलनस्य प्रस्तावः कृतः ।

भारतस्य प्रथमः 'स्टाक् एक्स्चेञ्ज्'कार्यालयः अत्र एव आरब्धः । १८५० तमे वर्षे वटवृक्षस्य अधः स्थित्वा वाणिज्यं कुर्वद्भिः कैश्चित् वाणिज्यघटकैः १८७७ तमे वर्षे दलालवीथ्याम् एषा संस्था आरब्धा । इदानीन्तनं स्टाक् एक्स्चेञ्ज्भवनं ततः शतवर्षाणाम् अनन्तरं निर्मितम् ।

भारतस्य अतिविशालः तीरप्रदेशः मुम्बयीनगरे एव अस्ति । अत्र सर्वदा सम्मर्दः कोलाहलः च भवति । १८७० - १९७० तमवर्षाभ्यन्तरे विक्टोरिया-डाक्स्प्रदेशे ससून्, प्रिन्सेस्, अलेक्साण्ड्रिया, इन्दिराडाक्स् इत्यादीनां निर्माणम् अभवत् ।

मुम्बयीतः एकादशकिलोमीटर्दूरे नावा-षेवा द्वीपे जवहर्लालनेहरुनौकास्थानकं निर्मितम् अस्ति । १९४४ तमे वर्षे एप्रिल् १४ दिनाङ्के मध्याह्ने सार्धद्वादशवादने विक्टोरियापोर्ट्मध्ये कार्यं कुर्वद्भिः कैश्चित् कार्मिकैः ब्रिटिष्नौकदलस्य एस्. एस्. पोटस्टिकैन्नामिकायाः नौकातः आगच्छन् धूमः दृष्टः । तस्यां नौकायां कराचीतः आगतानि विविधवस्तूनि, कोटिशः रूप्यकाणां सुवर्णं, शस्त्रास्त्राणि च आसन् ।

ततः अचिरात् एव स्फोटस्य महान् शब्दः श्रुतः । नगरजनाः भयभ्रान्ताः अभवन् । नौकास्थाने स्थिताः ५४ नौकाः अग्निग्रस्ताः अभवन् । आदिनं स्फोटस्य शब्दः १० कि. मी. दूरं यावत् श्रूयते स्म । नगरे तत्र तत्र सुवर्णशलाकाः पतिताः । २४ अग्निशामकयन्त्रैः महता कष्टेन अग्निः निर्वापितः । एतस्मात् अपघातात् नष्टानाम् अवशेषाणां निष्कासनार्थं दशसहस्रं जनाः षट् मासान् यावत् कार्यं कृतवन्तः ।

भारते मुम्बयीनगरस्य विशिष्टं स्थानम् अस्ति । अत्र विविधभाषिकाः विविधसांस्कृतिकाः च जनाः वसन्ति । कास्मोपालिटिन्नगरम् इति प्रसिद्धम् एतत् । महाराष्ट्रियाः अन्यराज्यीयाः वैदेशिकाः च अत्र निवसन्ति । मजगाप्रदेशे फेर्रीवर्फसमीपे १८० वर्षेभ्यः प्राचीनम् इति कथ्यमानं 'क्वाङ्ग कुङ्ग' आलयः अस्ति । मुम्बयीनगरे वसतां त्रिसहस्राधिकानां चीनादेशमूलानां पवित्रं स्थानम् एतत् ।



*मुम्बयीनगरीयः बहुभाषिकः*
*बहुधर्मीयः समाजः*



महाराष्ट्रस्य राजधानी मुम्बयीनगरं भारतीय-चित्रोद्यमस्य राजधानी इत्यपि परिगण्यते । अतः एव मुम्बयी 'इण्डियन् हालिवुड्' इति ख्यातम् अस्ति । भारते ऐदम्प्राथम्येन १८९६ तमे वर्षे जुलैमासस्य सप्तमे दिनाङ्के अत्रत्ये वाट्सन्-वसतिगृहे इदानीन्तने एस्प्लनेड्भवने चलच्चित्रं प्रदर्शितम् । गोर्गान्प्रदेशे निर्मितायां चित्रनगर्यां वर्षाभ्यन्तरे शताधिक-चलच्चित्राणि निर्मातुं शक्यते ।

भारतस्य सिंहद्वारम् इति प्रख्यातस्य 'गेट् वे आफ् इण्डिया' इत्येतस्य समीपे स्थिते एन्. एस्. आंग्रे नौकादलप्राङ्गणे चतुःशतवर्षप्राचीना 'सन्डायल्'घटी अस्ति । त्रिमीटर् - परिमितौन्नत्यवती अस्ति एषा घटी । एतां परितः मानवशिरांसि, विचित्राः प्राणिनः च शिलाभिः निर्मितानि सन्ति । नौकास्थानस्य प्रवेशात् पूर्वं नाविकैः समयः ज्ञातव्यः इत्यतः समुद्राभिमुखं पोर्चुगीसुजनैः निर्मिता अस्ति एषा घटी ।



चतुश्शतवर्षप्राचीना सूर्यघटी

मुम्बयीनगरस्य प्रमुखं स्थानम् अस्ति गेट् वे आफ् इण्डिया । एतत् शिलाभिः निर्मितं सिंहद्वारम् । अरेबिया-समुद्राभिमुखं गाम्भीर्यपूर्वकं तोरणमिव स्थितम् अस्ति एतत् सिंहद्वारम् । १९२७ तमे वर्षे एतत् द्वारं निर्मितम् अभवत् । ततः पूर्वम् इंग्लेण्डदेशस्य राज्ञः किङ्गजार्जवर्यस्य, राज्ञ्याः मेर्याः च स्वागतार्थं १९११ तमे वर्षे त्वरया निर्मितमेकं श्वेतं द्वारम् आसीत् ।

स्वातन्त्र्यप्राप्तेः अनन्तरं स्वदेशं प्रति प्रस्थितानां ब्रिटिषसैनिकानाम् आप्रच्छनं 'गेट् वे आफ् इण्डिया' स्थाने एव कृतम् आसीत् ।



गेट् वे आफ् इण्डिया



# सहस्ररूप्यकाणां युतकम्

सुन्दरराजः कनकराजः च देवेन्द्रपुरे वसतः स्म । उदरम्भरणार्थं लघु-कार्याणि कुर्वन्तौ तौ जीवनं यापयतः स्म । एवं स्थिते कदाचित् तत्र दुर्भिक्षकालः आगतः । तदा द्वौ अपि कार्यरहितौ अभवताम् । प्राणधारणार्थं ताभ्याम् उद्योगः अन्वेष्टव्यः आसीत् । अतः सुन्दरराजः कनकराजः च कार्यम् अन्विष्यन्तौ नगरं गतवन्तौ । वर्षाभ्यन्तरे परिश्रमेण बहु धनं सम्पादितवन्तौ च । तदा सुन्दरराजः चिन्तितवान् यत् देवेन्द्रपुरं गत्वा स्ववैभवं प्रदर्शनीयम् इति । एषः प्रस्तावः कनकराजाय अपि अरोचत ।

''ग्रामं प्रति रिक्तहस्ततया गमनं न उचितम् । बान्धवेभ्यः दातुं किमपि स्वीकृतं चेत् वरम्'' इति स्वाभिप्रायं प्रकटितवान् सुन्दरराजः । ततः उभौ अपि विपणिं गतवन्तौ ।

देवेन्द्रपुरे दशाधिकमित्राणि आसन् । तेभ्यः दातुं दशविधवस्तूनि क्रीतवान् सुन्दरराजः । शतं रूप्यकाणि तेन व्ययितानि । किन्तु कनकराजः लघुलघुवस्तूनि केवलं क्रीतवान् । तदा सुन्दरराजः कनकराजम् उद्दिश्य - ''भवान् बहूनि लघुवस्तूनि स्वीकृतवान् अस्ति । ग्रामजनैः अस्माकं स्तरः ज्ञातव्यः खलु ! तदर्थं मूल्यवन्ति वस्तुनि एव स्वीकरणीयानि आसन्'' इति उक्तवान् ।

''अहं मम सामर्थ्यानुगुणं क्रीतवान् अस्मि । ग्रामजनेभ्यः इतोऽपि अधिकं व्ययितुं न शक्नोमि अहम्'' इति निःसङ्कोचम् उक्तवान् कनकराजः । द्वौ अपि यदा विपण्याम् अटतः स्म तदा कश्चित् वणिक् - ''एतादृश्यां महत्यां विपण्यां मत्समीपे विद्यमानानि वस्तूनि क्रेतुं योग्यः धनिकः नास्ति खलु'' इति उच्चस्वरेण



आक्रोशं करोति स्म । तदा कनकराजः तं वणिजम् उद्दिश्य - "भवत्समीपे विद्यमानानि वस्तूनि प्रदर्शयतु तावत्" इति उक्तवान् ।

तदा वणिक् एकं युतकं निष्कास्य प्रदर्शयन् - "एतत् वस्त्रं चीनादेशीयम् । अरब्देशस्य सौचिकेन कौशलपूर्वकम् एतस्य युतकस्य सीवनं कृतम् अस्ति । सुवर्णमयेन रजतमयेन च सूत्रेण एतस्य सीवनं कृतम् अस्ति । आलङ्कारिकगुच्छाः उत्तमैः मौक्तिकैः कृताः सन्ति । अतः एतस्य युतकस्य वास्तविकं मूल्यं दशसहस्रं रूप्यकाणि । किन्तु अन्यान्यकारणैः अहं सहस्ररूप्यकैः एतस्य विक्रयणं कुर्वन् अस्मि" इति उक्तवान् ।

"किम् एतस्य मूल्यं सहस्रं रूप्यकाणि ? तर्हि एतत् कस्मैचित् राज्ञे मन्त्रिणे वा प्रदर्शयतु भवान् । एतादृशीं विपणिं प्रति एतस्य आनयनेन किं प्रयोजनम् ?" इति उक्तवान् सुन्दरराजः ।

अनुक्षणं कनकराजः 'मूल्यं न्यूनीकरोतु' इति वणिजम् उक्तवान् ।

"न्यूनमूल्येन तु न ददामि एव" इति उक्तवान् वणिक् ।

कनकराजस्य समीपे नवशतं रूप्यकाणि आसन् । अतः सः सुन्दरराजात् शतं रूप्यकाणि ऋणरूपेण स्वीकृत्य तत् युतकं क्रीतवान् एव ।

"एतावत् मूल्यवत् युतकं कस्मै दातुम् ? कः धरति एतत् ?" इति आश्चर्येण पृष्टवान् सुन्दरराजः ।

तदा कनकराजः मन्दहासपूर्वकम् - "इतरेषां कृते सहस्रं रूप्यकाणि व्ययीकर्तुं किम् अहं मूर्खः ? अहमेव धरामि एतत् युतकम् । एतत् धृत्वा ग्रामे अटामि चेत् मां गौरवपूर्वकं पश्यन्ति सर्वे" इति उक्तवान् ।

"तदर्थं सहस्रस्य रूप्यकाणां व्ययः किमर्थम् ? एतेन कः आनन्दः ? दुःखमेव भवेत् - 'बहुधनं व्ययितं खलु' इति । चिन्तयतु भवान्" इति उक्तवान् सुन्दरराजः ।

"मित्र ! सुखं कथम् अनुभोक्तव्यम् इत्यपि न जानाति खलु भवान् ! इतरेभ्यः यावत् वा व्ययीकरोतु । तेन तेषां तृप्तिः न भवति । अतः गौरवम् अपि न लभ्यते ।

किन्तु यदि आत्मनः निमित्तं व्ययीक्रियते तर्हि गौरवम् अधिकं भवति । सर्वे आदरेण पश्यन्ति । एतं विषयं स्मरतु जीवने'' इति उपदिष्टवान् कनकराजः ।

अनन्तरं द्वौ अपि देवेन्द्रपुरं प्राप्तवन्तौ । ग्रामसीमायां सरोवरमेकम् आसीत् । 'अत्रैव स्नानं कृत्वा सहस्ररूप्यकैः क्रीतं युतकं धृत्वा एव ग्रामः प्रवेष्टव्यः' इति निश्चितवान् कनकराजः ।

किन्तु सुन्दरराजः तथा न कृतवान् । ग्रामं प्रविश्य परिचितान् दृष्ट्वा आत्मना आनीतानि उपायनानि तेभ्यः दत्तवान् । सर्वे तम् आदरपूर्वकं स्वागतीकृत्य कनकराजस्य विषये विचारितवन्तः ।

''कनकराजः कुशली अस्ति । न केवलं तावत्, सहस्ररूप्यकाणि दत्त्वा अत्र धर्तुम् एव एकं युतकं क्रीतवान् अस्ति सः'' इति उक्तवान् सुन्दरराजः ।

'कनकराजः अपि आगतवान् अस्ति' इति ज्ञात्वा तेषु कञ्चन कनकराजं द्रष्टुं सरोवरं गतवन्तः । तदा कनकराजः स्नानं कृत्वा युतकम् धरन् आसीत् । ग्रामीणाः कनकराजं परितः स्थित्वा - ''भवता सह त्रं रूप्यकाणि दत्त्वा युतकं क्रीतम् इति सुन्दरराजेन उक्तम् । तावतः मूल्यस्य युतकं कीदृशं स्यात् इति कुतूहलम् अस्माकम् । दर्शयतु तावत्'' इति उक्तवन्तः ।

तदा कनकराजः - ''न दृश्यते वा ? तदेव युतकं धृतम् अस्ति मया'' इति उक्तवान् ।

ग्रामीणाः समीपतः युतकम् अवलोक्य आश्चर्यचकिताः अभवन् । तेषु एकः -





''नगरवासिषु केचन वञ्चयन्ति इति श्रुतवान् आसम् । एतस्य युतकस्य मूल्यं तावत् स्यात् इति न भाति खलु ! दर्शनेन तु सामान्ययुतकवत् भाति एतत् । सहस्त्रं रूप्यकाणि दत्तानि इत्येतत् सत्यमेव चेत् खेदावहः विषयः एषः'' इति उक्तवान् ।

सम्भ्रान्तः कनकराजः सुवर्णस्य सूत्राणां विषये, मौक्तिकानां विषये च यदा उक्तवान् तदा कश्चित् अविश्वसन् इव शिरः चालयन्- ''स्यात् नाम । किन्तु अत्र उपयुक्तानि सूत्राणि तु सामान्यसूत्राणि इव एव दृश्यन्ते । सुवर्णसूत्राणि नैजमौक्तिकानि च युतके स्युः । किन्तु तेन कः लाभः ? कथनानन्तरम् एव सर्वं ज्ञायते । एतादृशस्य युतकस्य मूल्यं शतरूप्यकात्मकमात्रं स्यात्, न तु ततोऽप्यधिकम् । मित्र ! सत्यं वदतु । भवता असत्यम् उक्तम् आसीत् खलु !'' इति पृष्टवान् ।

तदा कनकराजः तैः सह ग्रामं प्रविश्य सुन्दरराजम् उद्दिश्य - ''भवान् एव एतेषां सन्देहान् निवारयतु'' इति उक्तवान् । युतकस्य मूल्यं सहस्त्रं रूप्यकाणि इति यदा सुन्दरराजः अपि उक्तवान् तदा कश्चित् - ''भवति विद्यमाने अपि कनकराजः वञ्चितः अभवत् वा ? कीदृशः भवान् ? सह एव वसन् भवान् मित्रं कश्चित् वञ्चयन् अस्ति इति दृष्ट्वा अपि कथं मौनं स्थितवान् ?'' इति सुन्दरराजं निन्दितवान् ।

''अत्र सुन्दरराजस्य दोषः कोऽपि नास्ति । अहं स्वेच्छया युतकं क्रीतवान् अस्मि'' इति कनकराजः विवरणं कुर्वन् - ''सुन्दरराजद्वारा युतकस्य विषयं ज्ञात्वा भवतां मनसि पूर्वाग्रहभावः उत्पन्नः आसीत् । यदा वस्तुस्थितिः ज्ञाता तदा निराशा जाता । ऐदम्प्राथम्येन ये युतकं पश्यन्ति ते दर्शनमात्रेण चकिताः भवन्ति एव'' इति उक्तवान् ।

अनन्तरं कनकराजः ग्रामे सर्वत्र अटितवान् । केचन तस्य पादरक्षाविषये विचारितवन्तः । अन्ये केचन तस्य हस्ते विद्यमानायाः घट्याः विषये विचारितवन्तः । पुनः केचन 'भूस्वामिनः पुत्रस्य श्मश्रु इव भवतः श्मश्रु अपि दृश्यते' इति उक्तवन्तः । एवम् अन्यान्यविषये सम्भाषणम् अभवत् । किन्तु युतकस्य

विषये केनापि न पृष्टमेव ।

कनकराजः स्वयं युतकस्य विषयं यदा उपस्थापितवान् तदा 'सम्यक् अस्ति' इति नीरसप्रतिक्रियां प्रकटितवन्तः ते ।

दिनद्वयं यावत् ग्रामे स्थित्वा तृतीयदिने सुन्दरराजः कनकराजः च प्रतिप्रयाणम् आरब्धवन्तौ । द्वयोः परिचिताः केचन - ''कनकराजस्य विषये अवधानं भवतु'' इति सुन्दरराजम् उक्तवन्तः ।

अन्ये केचन कनकराजम् उपदिष्टवन्तः- ''मित्र ! भवान् यत् यत् सम्पादयति तस्य वृथा व्ययं मा करोतु । सुन्दरराजः बुद्धिमान् अस्ति । अतः तस्य सूचनानुगुणं व्यवहरतु'' इति ।

नगरगमनमार्गे कनकराजः - ''अस्माकं ग्रामीणाः स्वार्थिनः । भवता उपायनानि दत्तानि इति कारणतः ते भवन्तं श्लाघितवन्तः। अहं तावत् धनं मदर्थं विनियुक्तवान् इति कारणतः ते मां निन्दितवन्तः । पुनः कदापि अत्र न आगमिष्यामि'' इति उक्तवान् ।

तदा सुन्दरराजः हसन् - ''भवान् स्वस्य विषये एव सम्यक् न जानाति । एवं स्थिते इतरेषां विषये कथं वदति ? भवान् सहस्ररूप्यकैः यत् युतकं क्रीतवान् तत् भवतः निमित्तं वा ? न । अन्ये प्रशंसां कुर्युः इति कारणतः भवान् क्रीतवान् । स्वस्य निमित्तं तत् क्रीतं यदि स्यात् तर्हि तत् धृत्वा स्वयम् आनन्दम् अन्वभविष्यत् । किन्तु भवता तथा न कृतम् । अन्ये यदा तस्य मूल्यं न अवगतवन्तः, तदा भवतः दुःखम् अभवत्। इतरेषां श्लाघनप्राप्त्यर्थं भवान् सहस्रं रूप्यकाणि व्ययितवान् खलु ! तत्स्थाने दश रूप्यकाणि व्ययितानि चेत् अपि भवान् श्लाघनं प्राप्तुम् अशक्ष्यत्। चिन्तयतु। अवगमनं विना इतरान् स्वार्थपरान् वक्तुं कः अधिकारः अस्ति भवतः ?'' इति उक्तवान् ।

कनकराजः स्वदोषम् अवगतवान् । तदारभ्य सः प्रशंसाम् अनपेक्षमाणः मित्राणि अवगच्छन् सन्तोषेण जीवनं यापितवान् ।





# स्पर्धायाः निराकरणम्

कस्मिंश्चित् काले वीरसेनो नाम राजा चन्दनगिरिं परिपालयति स्म । तस्य पुत्रः जयसिंहः । पुत्री कमलावती । जयसिंहः अन्वर्थनामकः महाशूरः च आसीत् । अनेकेषु युद्धेषु विजयः सम्पादितः आसीत् तेन । पराजयं सर्वथा न जानाति स्म सः ।

वीरसेनः पुत्रं जयसिंहम् उत्तराधिकारिणं घोषयित्वा राज्यभारं सर्वं पुत्रे एव निक्षिप्तवान् आसीत् । वीरसेनः नाममात्रेण राजा आसीत् । कमलावती प्राप्तवयस्का जाता । अतः वीरसेनः पुत्र्याः निमित्तं योग्यस्य वरस्य अन्वेषणे निमग्नः आसीत् । इदं ज्ञात्वा जयसिंहः - ''मम अनुजां कश्चित् महाशूरः एव परिणयेत् । तन्नाम यः मां पराजित्य जयशाली भविष्यति तस्मै एव मम अनुजा दातव्या'' इति पितरम् उक्तवान् ।

''भवतः चिन्तनम् युक्तमेव अस्ति । किन्तु स्पर्धा भवता सह मास्तु । अन्यैः सह भवतु'' इति उक्तवान् वीरसेनः ।

पितुः वचनं निराकुर्वन् जयसिंहः - ''मां यः जेष्यति तेन सहैव मम भगिन्याः विवाहः'' इति दृढस्वरेण उक्तवान् । तथैव उद्घोषितवान् च ।

कानिचन दिनानि यावत् केऽपि राजकुमाराः अग्रे न आगतवन्तः । यतः 'जयसिंहं जेतुं शक्नोमि' इति कस्यापि विश्वासः न आसीत् । अन्ते श्यामलदेशस्य राजकुमारः वायुवर्मा कमलावतीं परिणेतुम् इच्छन् अग्रे आगतवान् ।

वायुवर्मा सर्वदृष्ट्या अपि कमलावत्याः अनुरूपः वरः आसीत् । कमलावती अपि तं परिणेतुं सिद्धा आसीत् ।

ततःपूर्वं वायुवर्म-जयसिंहयोः स्पर्धा आयोजनीया आसीत् । अतः शुभे मुहूर्ते

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

स्पर्धा अपि निश्चिता ।

किन्तु स्पर्धायाः पूर्वदिने काचित् दुर्घटना प्रवृत्ता । यदा राजकुमारी उद्याने विहरन्ती आसीत् तदा केचन दुष्टाः ताम् अपहृतवन्तः ।

जयसिंहः वायुवर्माणम् आहूय - "मम अनुजां केऽपि दुष्टाः अपहृतवन्तः सन्ति । अहं ताम् अन्वेष्टुं प्रस्थितवान् अस्मि । मम आगमनानन्तरं स्पर्धा भवतु" इति उक्तवान् ।

"ताम् अन्वेष्टुम् अहम् अपि आगमिष्यामि । ते दुष्टाः चित्रहिंसया दण्डनीयाः" इति उक्तवान् वायुवर्मा ।

ततः उभौ अपि शस्त्राणि स्वीकृत्य उद्यानम् आगतवन्तौ । सम्यक् परिशीलनेन ताभ्यां ज्ञातं यत् दुष्टैः कमलावती कुत्र नीता इति । यतः बुद्धिमत्या कमलावत्या स्वेन चितानि पुष्पाणि गमनमार्गे पातितानि आसन् । तत् दृष्ट्वा वायुवर्मा जयसिंहः च पतितानां पुष्पाणां मार्गम् अनुसृत्य बहुदूरं गतवन्तौ । तत्र कश्चित् योगी कस्यचित् वृक्षस्य अधः उपविष्टवान् आसीत् ।

योगिनः मेलनानन्तरं पुष्पमार्गः ताभ्यां न दृष्टः । 'कमलावत्याः समीपे विद्यमानानि पुष्पाणि समाप्तानि स्युः' इति चिन्तयन्तौ तौ योगिनः समीपं गत्वा - "स्वामिन् ! एतेन मार्गेण कैश्चित् दुष्टैः बलात् नीयमाना स्त्री भवता दृष्टा वा ?" इति पृष्टवन्तौ ।

"आम्, चतुर्भिः दृढकायैः बलात् नीयमाना काचित् युवतिः मया दृष्टा । अहं



तान् बहुधा उपदिष्टवान् । ते न श्रुतवन्तः । एतेन मार्गेण एव ते गतवन्तः" इति उक्तवान् ।

योगिनः वचनानुसारं तौ अरण्यमार्गेण गतवन्तौ । तत्रत्ये कस्मिंश्चित् पर्वते काचित् गुहा आसीत् । गुहायाः द्वारे एकं पुष्पं पतितम् आसीत् ।

"दुष्टाः कमलावतीम् एतस्यां गुहायां बन्धने स्थापितवन्तः इति भाति । अहं गत्वा तस्याः विमोचनं साधयित्वा आगमिष्यामि" इति उक्तवान् वायुवर्मा ।

"न, न । भवान् अत्रैव भवतु । अहमेव तस्याः विमोचनं साधयित्वा आगमिष्यामि" इति उक्त्वा जयसिंहः गुहां प्रविष्टवान् ।

यदा सः अन्तः प्रविष्टवान् तदा एव

कयाचित् महत्या शिलया गुहायाः द्वारं पिहितम् अभवत् ।

गुहायाः बहिः स्थितवान् वायुवर्मा कस्याश्चित् युवत्याः आर्तनादं श्रुतवान् । ध्वनिम् अनुसृत्य वायुवर्मा गतवान् । तत्र कस्मिंश्चित् वृक्षे राजकुमारी बद्धा आसीत् । दुष्टाः तां भाययन्तः आसन् ।

तेषां नायकः कमलावतीम् उद्दिश्य - ''उन्मत्ते, भवतीं रक्षितुम् आगतवन्तौ वीरौ गुहायां बद्धौ स्तः । अतः भवती मां परिणयेत् एव । मत्तः भवतीं रक्षितुं कोऽपि नास्ति एव'' इति वदन् आसीत् ।

तदा वायुवर्मा खड्गम् आकृष्य एवं कथयितुः उपरि हठात् आक्रमणं कृतवान् । तदा तत्रत्याः दृढकायाः सर्वे सम्भूय वायुवर्माणं सम्मुखीकर्तुम् आगतवन्तः । किन्तु आत्मरक्षणे असफलाः ते अरण्ये कुत्रचित् पलायितवन्तः ।

वायुवर्मा कमलावत्याः रज्जुबन्धनम् अपनीय तां स्वीकृत्य गुहायाः समीपम् आगतवान् ।

सौभाग्यवशात् केचन अरण्यवासिनः तेन मार्गेण गमनसमये गुहायाः द्वारे अवरोधरूपेण स्थितां शिलाम् अपसार्य जयसिंहं रक्षितवन्तः आसन् । अनन्तरं वायुवर्मा, जयसिंहः, कमलावती च राजधानीं प्राप्तवन्तः । पुरोहितम् आहूय विवाह-मुहूर्तस्य निश्चयं कृतवान् कमलावत्याः पिता ।

तदा जयसिंहः - ''स्पर्धायाम् अहं जितः चेत् एव विवाहः खलु ? यदि दुष्टाः तां न अपाहरिष्यन् तर्हि अद्य स्पर्धा अभविष्यत् खलु !'' इति पृष्टवान् ।

''भवतोः स्पर्धा तु अद्य प्रवृत्ता एव । मां मोचयितुं भवता सह स्पर्धित्वा जयं प्राप्तवान् अस्ति एषः । पुनश्च स्पर्धा किमर्थम् ?'' इति उक्तवती कमलावती ।

जयसिंहः मौनं शिरः अवनमय्य स्थितवान् । किमपि न उक्तवान् । दुष्टाः कमलावतीं यत् अपहृतवन्तः आसन् तत् असत्यं, राज्ञा कमलावत्या च अभिनीतं नाटकम् इति जयसिंहेन न ज्ञातम् एव ।






नारदस्य गमनानन्तरं धर्मराजः राजसूययागविषये अनुजैः सह समालोचनं कृतवान् । 'राजसूययागः यशस्वी भविष्यति चेत् युद्धस्य सम्भवः अपि भविष्यति । युद्धस्य कारणात् असंख्याकाः प्राणैः वियुक्ताः भवेयुः' इति चिन्तयतः धर्मराजस्य मनसि एकत्र प्रजाहितचिन्ता । अपरत्र 'राजसूययागः अनुष्ठितः चेत् दिव्यलोकस्य प्राप्तिः भविष्यति । अतः यागः अनुष्ठेयः' इति इच्छा । अन्ते यागः करणीयः इति निर्णयः स्वीकृतः तेन ।

निर्णयस्वीकरणस्य अनन्तरम् अपि धर्मराजस्य मनसि द्वन्द्वम् आसीत् । अतः कदाचित् सः राजसभायां स्वेन क्रियमाणान् प्रयत्नान् विस्तरेण निरूप्य - ''राजसूययागं कर्तुम् अहम् अर्हः वा ?'' इति मन्त्रिणः पृष्टवान् ।

तदा मन्त्रिणः - ''राजन् ! राजसूययागं कर्तुं भवान् अर्हः एव । यशस्वितया यागं समापयितुं, साम्राज्यस्य परिपालनं कर्तुं च यत् सामर्थ्यम् आवश्यकं तत् भवति निश्चयेन अस्ति । अतः राजसूययागः भवतु'' इति उक्तवन्तः ।

मन्त्रिणां वचनं श्रुत्वा धर्मराजस्य निश्चयः दृढः अभवत् । 'बलिष्ठानाम् अनुजानां सहकारः अस्ति । अतः शत्रून् पराजित्य तैः दत्तानि उपायनानि प्राप्तुं शक्नोमि । परिस्थितिः अनुकूलकरी अस्ति । अतः युद्धं करणीयम् एव' इति निर्णयः स्वीकृतः

''जरासन्धस्य कथा''



धर्मराजेन । तथापि एकवारं कृष्णस्य अभिप्रायः स्वीकरणीयः इति चिन्तितं तेन ।

तत्क्षणे एव द्वारकां प्रति दूतान् प्रेषितवान् धर्मराजः । धर्मराजेन सह समालोचनार्थं कृष्णः कैश्चित् सहकारिभिः सह इन्द्रप्रस्थं प्रति आगतवान् । औपचारिकस्वागतादिकं कृत्वा धर्मराजः कृष्णम् उद्दिश्य - ''कृष्ण, राजसूययागः करणीयः इति मम प्रबला इच्छा अस्ति । मद्धितकाङ्क्षिणः सर्वे राजसूययागकरणस्य प्रस्तावस्य प्रोत्साहं कुर्वन्तः सन्ति । किन्तु यागं कर्तुं महत् सामर्थ्यम् अपेक्षितम् । मम शक्तिः अपर्याप्ता । इतरेषां साहाय्यं प्रार्थयितुं न शक्नोमि । अतः भवतः अभिप्रायः सहकारः च मया अपेक्ष्यते । भवान् यथा सूचयति तथा आचरामि । मया किं करणीयम् इति सूचयतु कृपया'' इति उक्तवान् ।

तदा कृष्णः उत्तरितवान् - ''धर्मराज ! सर्वदृष्ट्या अपि यागं कर्तुं भवान् समर्थः अस्ति । भवान् सर्वं जानात्येव । पूर्वं यदा परशुरामेण क्षत्रियाणां नाशः कृतः आसीत्, तदा इक्ष्वाकूणां त्रयः वंशाः रक्षिताः आसन् । ते एव नैजक्षत्रियाः । कालक्रमेण ते एव एकोत्तरशतधा प्रवृद्धाः अभवन् । ययातिवंशजाः, भोजवंशजाः एव चतुर्दशधा प्रवृद्धाः । राजवंशजान् जित्वा जरासन्धः सम्राट् अभवत् । जरासन्धः अत्यन्तं बलशाली अहङ्कारी च । अजेयः सः । तस्य सेनापतिः शिशुपालः । पश्चिमभागे विद्यमानः राजा भगदत्तः यद्यपि भवतः पितुः मित्रं, तथापि प्रकृतं जरासन्धं सेवमानः अस्ति सः । एतादृशाः अनेके शूराः जरासन्धपक्षे सन्ति । जरासन्धेन सह पुनः पुनः सङ्घर्षं कर्तुम् अशक्ताः वयं द्वारकां गत्वा तत्र वासम् आरब्धवन्तः । किन्तु यावत् जरासन्धः जीवति तावत् राजसूययागः यशस्वी न भविष्यति । अतः सर्वप्रथमं तस्य संहारः कर्तव्यः'' इति उक्तवान् ।

तदा धर्मराजः किञ्चिदिव धैर्यच्युतः अभवत् । सः कृष्णम् उद्दिश्य - ''सर्वेऽपि स्वस्य सुखं केवलं परिगणयन्तः सन्ति । 'राज्यस्य विस्तारणं करणीयम्' इति कस्यापि उद्देशः न दृश्यते । इच्छा अस्ति

चेत् अपि सामर्थ्यं नास्ति तेषाम् । अहम् एतत् कार्यं कर्तुं सङ्कल्पितवान् आसम् । किन्तु वस्तुस्थितिं पश्यामि चेत् भासते यत् एतस्य प्रयत्नस्य त्यागः एव वरम् इति । अहम् एवं चिन्तयित्वा तूष्णीं भवामि यत् एतद्यागकरणे समर्थः कश्चित् शूरः मम वंशे अग्रे उत्पद्येत इति । न जाने, अस्माकं वंशे एतादृशानां शूराणां जन्म भविष्यति वा न वा इति । किन्तु जरासन्धस्य शक्तिं नियन्त्रयितुं भवान् एव न शक्नोति चेत् अस्मादृशानां का गतिः स्यात्'' इति उक्तवान् ।

भीमः धर्मराजस्य वचनं निराकुर्वन् - ''आरम्भे एव ये भयम् अनुभवन्ति ते जीवने किमपि साधयितुं न शक्ष्यन्ति । मार्गदर्शनं कर्तुं कृष्णः अस्ति । मम बलम्, अर्जुनस्य सामर्थ्यं चापि अस्ति एव । शक्तिशालिनां नाशः एव शूराणां लक्षणम्'' इति उक्तवान् ।

कृष्णः अपि - ''पूर्वम् अस्माभिः पराजयः प्राप्तः स्यात् नाम । तथापि जरासन्धम् उपायेन मारयितुं शक्नुमः इत्यत्र नास्ति सन्देहः'' इति उक्तवान् । तथापि धर्मराजः धैर्यं न प्राप्तवान् ।

''साम्राज्यस्य आशया अहं भवन्तं, नेत्रदीपकौ अनुजौ च कथं वा जरासन्धसमीपं प्रेषयेयम् ? तं जेतुं भवन्तः न शक्नुवन्ति । कोऽपि अपायः सम्भवति चेत् सर्वथा दुर्गतिः एव स्यात् । अतः इदानीं राजसूययागप्रस्तावस्य त्यागः एव वरम्''



इति उक्तवान् धर्मराजः ।

तदा अर्जुनः - ''प्रयत्नरहितस्य जीवनं व्यर्थम् । मम गाण्डीवस्य, रथस्य, अक्षयतूणीरस्य, बाहुबलस्य च उपयोगः शत्रुसंहारार्थं न क्रियते चेत् किं प्रयोजनम् ?'' इति पृष्टवान् ।

धर्मराजः जरासन्धस्य विषये ज्ञातुम् उत्सुकः आसीत् । तदा कृष्णः जरासन्धस्य वृत्तान्तं विवृतवान् ।

पूर्वं बृहद्रथनामकः कश्चित् राजा मगधदेशं परिपालयति स्म । पराक्रमेण सः इन्द्रः इव । तस्य समीपे अक्षौहिणी-त्रयपरिमितं सैन्यम् आसीत् । यमले काशीराजकुमार्यौ तेन परिणीते आस्ताम् । ताभ्यां सन्तानः न प्राप्तः आसीत् । अतः



सः पुत्रकामेष्टियागं कृतवान् । तथापि फलं न प्राप्तम् । अन्ते सः पत्नीभ्यां सह तपः आचरितुं प्रस्थितवान् ।

वने कस्यचित् आम्रवृक्षस्य अधः गौतमवंशस्थः चण्डकौशिकनामकः ऋषिः बृहद्रथेन दृष्टः । चण्डकौशिकः श्रेष्ठः तपस्वी आसीत् । बृहद्रथः अत्यन्तं श्रद्धया चण्डकौशिकस्य सेवां कृतवान् ।

कदाचित् चण्डकौशिकः - "वत्स, भवान् बहुदिनेभ्यः मां सेवमानः अस्ति । भवतः सेवया अहं नितरां तृप्तः अस्मि । भवान् यत् इच्छति तत् याचतु तावत्" इति उक्तवान् ।

"स्वामिन् ! मम सन्तानभाग्यं नास्ति । पुत्रकामेष्टियागेन अपि प्रयोजनं न अभवत् । अतः अहम् इदानीं वैराग्यं प्राप्य तपः आचरितुम् अत्र आगतवान् अस्मि । मम अन्या कापि अपेक्षा नास्ति" इति उक्तवान् बृहद्रथः ।

तत्क्षणे एव एकम् आम्रफलं चण्डकौशिकस्य अङ्के पतितम् । तत् फलं चण्डकौशिकः बृहद्रथाय यच्छन् - "राजन् ! भवतः अपेक्षा पूर्णा भविष्यति । भवान् अचिरात् एव पुत्रं प्राप्स्यति । अतः भवान् निश्चिन्तः सन् स्वराज्यं प्रति प्रतिगच्छतु" इति उक्तवान् ।

बृहद्रथः तत् फलं स्वीकृत्य पत्नीभ्यां सह स्वराज्यं प्रति गतवान् । उभयोः पत्न्योः विषये समाना प्रीतिः आसीत् इति कारणतः द्वयोः कृते अपि अर्धार्धं फलं दत्तवान् बृहद्रथः । कालक्रमेण युगपत् ते द्वे अपि राजकुमार्यौ प्रसूतवत्यौ । किन्तु उभयत्र अपि शिशोः अर्धशरीरम् आसीत् । एकं नेत्रम्, एकः कर्णः, एकः पादः, अर्धमुखम्, अर्धजठरं च आसीत् एकैकस्य शिशोः । एतौ विचित्रौ शिशू जन्मानन्तरम् अपि जीवतः इति ज्ञात्वा भयेन राज्ञ्यौ रोदनम् आरब्धवत्यौ । तदा प्रसविकाः शिशोः अर्धभागं स्वीकृत्य कुत्रचित् जलागारे स्थापितवत्यः ।

तस्मिन् प्रदेशे जरानामिका काचित् राक्षसी आसीत् । सा शिशोः शरीरस्य भागौ स्वीकृत्य योजितवती । तेन पूर्णम् एकं शरीरं सिद्धम् अभवत् । शिशुः रोदनम् आरब्धवान् ।

रोदनस्वरं श्रुत्वा अन्तःपुरतः राजा राज्ञीभ्यां सह तत्र आगतवान् । मया स्वीकृतः एषः शिशुः राजकुमारः इति ज्ञात्वा राक्षसी मानवस्त्रीरूपं धृत्वा राज्ञे शिशुं दत्तवती । प्रवृत्तं सर्वं निवेदितवती च । राक्षसीं कृतज्ञताम् उक्त्वा महता आनन्देन राजा शिशुं नीत्वा प्रीत्या पोषितवान् ।

बृहद्रथः शिशोः जरासन्धः इति नामकरणं कृत्वा 'देशे सर्वत्र उत्सवाचरणं करणीयम्' इति आदिष्टवान् ।

अग्रे जरासन्धः प्रौढत्वं प्राप्य असामान्यः पराक्रमी भूत्वा अनेकान् राज्ञः युद्धे पराजितवान् ।

कृष्णः कंसवधं कृतवान् इति ज्ञात्वा जरासन्धः कोपेन मथुरायाः उपरि आक्रमणं कृतवान् आसीत् । यतः कंसस्य पत्न्यः जरासन्धस्य पुत्र्यः आसन् ।

कृष्णः धर्मराजम् उद्दिश्य - "राजन् ! जरासन्धः केनापि शस्त्रेण मरणं न प्राप्स्यति । किन्तु मल्लयुद्धे भीमः तं पराजेतुं शक्ष्यति । मम वचसि विश्वासः अस्ति चेत् भीमार्जुनौ मया सह प्रेषयतु" इति उक्तवान् ।

"कृष्ण, कीदृशं वचनं भवतः ? ऋते भवत्तः अन्यः अस्मदीयः कः अस्ति ? 'जरासन्धः म्रियताम्' इति भवान् सङ्कल्पं करोति चेत् सः मृतः इत्येव अर्थः । भवतः अपेक्षानुगुणं कार्यं कर्तुम् अहं सिद्धः । भवतः सहकारः अस्ति चेत् भीमार्जुनौ किं वा कर्तुं न शक्नुतः ? वदतु । भवन्तः त्रयः अपि प्रयाणम् आरभन्ताम् । जरासन्धं हत्वा



विजयं प्राप्य प्रत्यागच्छन्तु'' इति उक्तवान् धर्मराजः ।

कृष्णः, भीमः, अर्जुनः च ब्राह्मणवेषं धृत्वा इन्द्रप्रस्थतः पद्मसरः, कालकूटं, गण्डकीं, महाशोणं च अतिक्रम्य पूर्वकोसलमिथिलादीनां मार्गेण पूर्वदिशि गतवन्तः । ते मगधदेशं प्राप्य गोवर्धनगिरिम् आरुह्य राजधान्याः अवलोकनं कृतवन्तः । मगधदेशः अत्यन्तं समृद्धदेशः । सर्वत्र जलसमृद्धिः, पशुसमृद्धिः च दृश्यते स्म । राजधानीं परितः रक्षणार्थम् इव पञ्च पर्वताः आसन् । अतः तस्य 'गिरिव्रजम्' इति नाम प्रसिद्धम् आसीत् ।

गिरिव्रजं परितः स्थितेषु पर्वतेषु चैत्यकनामके पर्वते त्रीणि भेरीवाद्यानि आसन् । यदि अपरिचितः कोऽपि नगरं प्रविशति तर्हि तानि स्वयमेव शब्दं कुर्वन्ति स्म । अतः कृष्णार्जुनौ प्रथमं गत्वा तानि वाद्यानि भञ्जितवन्तौ । प्रमुखद्वारे शस्त्रधारिणः द्वारपालकाः सर्वदा सञ्चरन्ति इति कारणतः ते त्रयः अपि चैत्यकशिखरस्य मार्गेण नगरसीमाम् अतिक्रान्तवन्तः ।

तावता कानिचन अपशकुनानि दृष्टवान् जरासन्धः स्नानं कृत्वा ग्रहकोपस्य उपशमनार्थं दैवीकार्ये मग्नः आसीत् । भीमः, अर्जुनः, कृष्णः च मालाकाराणां समीपं गतवन्तः । बलात् मालाकारेभ्यः मालाः स्वीकृत्य धृत्वा शरीरे चन्दनलेपनं कृतवन्तः । ततः ब्राह्मणवेषेण जरासन्धसमीपं गतवन्तः च ।

आगताः एते ब्राह्मणाः इति मत्वा जरासन्धः स्वयम् एतेषां समीपम् आगत्य आदरातिथ्यपूर्वकं स्वागतं कर्तुम् उद्युक्तः अभवत् । किन्तु कृष्णार्जुनभीमाः आतिथ्यं न स्वीकृतवन्तः, प्रत्युत मौनं स्थितवन्तः ।

ततः कृष्णः भीमार्जुनौ प्रदर्श्य - ''राजन् ! एतौ मौनव्रतधारिणौ स्तः । केवलं मध्यरात्रे सम्भाषणं करिष्यतः'' इति जरासन्धम् उद्दिश्य उक्तवान् ।

''भवतु तर्हि । मध्यरात्रे एव एतौ सत्करिष्यामि'' इति उक्त्वा तान् त्रीन् अपि यज्ञशालां प्रति प्रेषितवान् जरासन्धः ।



# वार्ताविषयाः बालाः



## जन्मदिनस्य उपायनम्

जन्मदिनोत्सवसमये बालानां कृते उपायनस्य दानं तावत् सामान्यः कश्चन विषयः । बान्धवाः मित्राणि वा उपायनं यच्छन्ति । उपायनस्वीकर्तारः कदाचित् विशिष्टम् उपायनं प्राप्य सन्तोषम् आश्चर्यं च अनुभवन्ति । केरलराज्यीयः कण्णानूरुजनपदीयः तालिपरम्बाप्रदेशीयः पञ्चदशवर्षीयः प्रवीणः नाम बालः स्वजन्मदिनोत्सवदिने एतादृशम् एव आश्चर्यकरम् उपायनं प्राप्तवान् । यतः तेन स्वरचितानां कवितानां सङ्ग्रहः (पुस्तकरूपस्थः) उपायनरूपेण प्राप्तः आसीत् । प्रवीणः जानाति स्म एव यत् स्वरचिताः कविताः प्रकाशयिष्यन्ते इति । किन्तु सः एतत् तु न जानाति स्म यत् एतावति अल्पे काले तत् प्रकाशितं भवेत् इति । बालकाः कथाः कविताश्च लिखन्ति, पत्रिकाभ्यः प्रेषयन्ति च । लोके एतत् सहजम् । किन्तु बालानां कविताः पुस्तकरूपेण विरलतया एव प्रकाश्यन्ते । स्थानीये केन्द्रीयविद्यालये दशमकक्ष्यायां पठन् प्रवीणः हिन्दीभाषया संस्कृतभाषया च कविताः रचयन् अस्ति ।

## तबलावादने अपूर्वं सामर्थ्यम्

आकाशवाण्यां गानार्थं वाद्यवादनार्थं वा नियमः भवति यत् भागग्राही षोडशवर्षीयः ततोऽधिकवयस्कः वा स्यात् इति । तथापि दीपकमेहतानामकस्य बालकस्य प्रतिभां दृष्ट्वा व्यामुग्धाः आकाशवाण्याः अधिकारिणः तं 'बि'स्तरीयत्वेन परिगणयन्तः तबलावाद्यवादने अनुमतिं दत्तवन्तः सन्ति । दीपकः षष्ठे वयसि एव तबलावादनम् आरब्धवान् । ततः सः गुरुमुखात् तबलावादने विशेषप्रावीण्यं प्राप्तवान् । इदानीं तेन 'नेषनल् टालेण्ट् सर्च् स्कालर्षिप्'नामकं विद्यार्थिवेतनं प्राप्यमाणम् अस्ति । विंशतिवयःपर्यन्तम् एतत् तेन प्राप्यते अपि । दीपकम् अधिकृत्य झी-टीविद्वारा एकं साक्ष्यचित्रं सज्जीक्रियमाणम् अस्ति ।

## भारतीया बालमेधाविनी

ब्राजिल्देशे 'सावलोरेङ्को' इत्यत्र एषु दिनेषु १०-१४ वर्षीय-बालिका-बालकानां कृते आयोजितः 'वर्ल्ड् यूथ् चेस् फेस्टिवल्'नामकः उत्सवः सम्पन्नः । एतस्मिन् उत्सवे भारतीयाः सप्त बालिका-बालकाः भागं गृहीतवन्तः आसन् । तेषु अन्यतमा आसीत् देहलीनगरीया टानिया सचदेव, यस्याश्च वयः अस्ति सप्त वर्षाणि । अत्रत्यासु स्पर्धासु भागग्रहणार्थम् अन्ताराष्ट्रिय-चतुरङ्गसंस्थया (इण्टर्नेषनल् चेस् फेडरेषन्) तस्यै विशेषानुमतिः दत्ता आसीत् । तस्यै अनुमतिं यच्छन् संस्थाध्यक्षः उक्तवान् - ''भारतस्य एतस्यै मेधाविन्यै भागग्रहणार्थम् अनुमतिदाने अहं विशेषसन्तोषम् अनुभवामि'' इति । एषिया-फेडरेषन् अध्यक्षः एतस्याः प्रशंसां कुर्वन् उक्तवान् यत् एतस्याः नैपुण्यम् अत्यपूर्वम् अस्ति । एतादृशाः लोके विरलतया एव दृश्यन्ते इति ।



# 'टुलिप्'नामकाः वृक्षाः

एवं हि श्रूयते यत् आफ्रिकाखण्डस्य अङ्गोलातः १८७० तमे वर्षे ऐदम्प्राथम्येन 'टुलिप्'वृक्षः श्रीलङ्कां प्रति नीतः इति । ततः स च वृक्षः भारतं प्रति आनीतः । इदानीम् एतज्जातीयाः वृक्षाः समग्रे प्रपञ्चे दृश्यन्ते । एतज्जातीयाः वृक्षाः महाराष्ट्रस्य समुद्रतीरप्रदेशेषु आधिक्येन दृष्टिगोचराः भवन्ति । भारतस्य उत्तरभागे एते वृक्षाः सदा हरिद्वर्णेन शोभन्ते । किन्तु दक्षिणभागे ग्रीष्मकाले एते पर्णरहिताः भवन्ति ।

एतद्वृक्षीयानि पर्णानि हरिद्वर्णीयानि परस्पराभिमुखानि च भवन्ति । शीतकाले हरिद्वर्णीयाः कोमलाः पल्लवाः अत्र उत्पद्यन्ते । शाखामूले घण्टाकारकाणां पुष्पाणां गुच्छानि उत्पद्यन्ते । सप्टम्बर्तः मे-मासान्तं यावत् एतज्जातीयेषु वृक्षेषु पुष्पाणि दृश्यन्ते । एतज्जातीयाः वृक्षाः ग्रीष्मकाले फलयुक्ताः भवन्ति । फलानि दीर्घाणि कृशानि च भवन्ति । एतज्जातीयाः वृक्षाः मन्दगत्या वर्धन्ते । एतज्जातीयानि काष्ठानि कोमलानि बलरहितानि च भवन्ति । अतः काष्ठानाम् उपयोगः अत्यल्पः ।

एतज्जातीयानां वृक्षाणां पुष्पाणि घण्टाकारकाणि भवन्ति इत्यतः आङ्ग्लभाषया 'स्कार्लेट् बेल्'नाम्ना निर्दिश्यन्ते । एतज्जातीयानां वृक्षाणां कोरकाणि मर्दनात् जलं निस्सारयन्ति । अतः एते वृक्षाः 'फौण्टन् ट्री' इत्यपि निर्दिश्यन्ते ।

वृक्षशास्त्रे एते वृक्षाः 'स्पातोडी काम्पानुलाटा'नाम्ना निर्दिश्यन्ते । एतत् वृक्षशास्त्रीयं नाम अपि एतस्य पुष्पाणां घण्टाकारकताम् आधारीकृत्य एव अस्ति । एतज्जातीयाः वृक्षाः प्राधान्येन अलङ्कारार्थम् एव वर्ध्यन्ते ।



अस्मद्देशीयाः ऋषयः - ११

# पराशरः

कल्माषपादः नाम राजा मृगयार्थं कदाचित् अरण्यं गतवान् आसीत् । तत्र मार्गभ्रष्टः सः पर्वतमूलस्थे लघुमार्गे गच्छन् आसीत् । तावता वसिष्ठपुत्रः शक्तिमहर्षिः तत्र आगतः । राजा तं सूचितवान् यत् मार्गात् अपसरतु इति । तदा मुनिः उक्तवान् - 'भवान् एव मार्गात् अपगत्य मम गमनार्थम् अवकाशं कल्पयतु' इति ।

एतत् श्रुत्वा राजा क्रुद्धः । सः बाणेन मुनिं प्रहृतवान् । तदा कुपितः मुनिः - ''मनुष्यः अपि भवान् मनुष्यः इव अव्यवहरन् पशुः इव व्यवहृतवान् । अतः भवान् तस्य जन्तोः रूपं प्राप्नोतु, यं जन्तुम् इतःपरं भवान् ऐदम्प्राथम्येन द्रक्ष्यति'' इति शापं दत्तवान् ।

तावता एव तेन मार्गेण गच्छन् कश्चन व्याघ्रः राज्ञा दृष्टः । अपरक्षणे एव राजा व्याघ्रः इव गर्जन् अग्रे आगत्य मुनिं मारितवान्, तं खादितवान् च ।

अनन्तरं सः राक्षसरूपं प्राप्य ततः कुत्रापि निर्गतवान् । शक्तिमुनेः पत्नी अदृश्यन्ती तत्समये गर्भवती आसीत् । द्वादश वर्षाणि अतीतानि चेदपि तस्याः गर्भतः शिशुः न निर्गतः । तत्प्रदेशवासिनः मुनयः परस्परं वदन्ति स्म यत् अदृश्यन्त्याः गर्भे स्थितः शिशुः मन्त्रपठनं कुर्वन् भवति इति । अग्रे कदाचित् शिशुः उत्पन्नः । तस्य नाम निश्चितम् अभवत् - 'पराशरः' इति । कपिलपुलस्त्यादयः तम् अध्यापितवन्तः ।

पराशरः मातुः मुखात् श्रुतवान् यत् स्वपितरं मारितवान् जनः इदानीं राक्षसरूपेण अटति इति । अतः सः समस्तराक्षसानां संहारार्थं कञ्चित् यज्ञम् आरब्धवान् । एतत् श्रुत्वा वसिष्ठः अन्यैः मुनिभिः सह आगत्य पराशरं प्रार्थितवान् यत् भवता यज्ञः स्थगनीयः इति । पितामहस्य वचनम् अङ्गीकृतवान् पराशरः । किन्तु एतावता सः यज्ञकुण्डे अग्निं ज्वालितवान् आसीत् । तस्य निर्वापणं तु शास्त्रविरुद्धम् । अतः पराशरः यज्ञकुण्डतः अग्निम् उन्नीय हिमालयदिशि वेगेन क्षिप्तवान् ।

हिमालये तदा तदा अग्निः उत्पद्यते, अरण्यं भस्मसात्करोति च । एतत् दृष्ट्वा जनाः परस्परं वार्तालापं कुर्वन्ति यत् हिमस्य द्रवीकरणार्थं पराशरेण क्षिप्तः अग्निः एव एवं तदा तदा दृश्यते इति ।



# भवन्तः जानन्ति वा ?

१. कः पक्षी शान्तिचिह्नत्वेन परिगण्यते ?
२. ब्रिटन्देशीया सर्वप्रथमप्रधानमन्त्रिणी का ?
३. ग्रहेषु बृहत्तमः कः ?
४. सर्पः किमर्थं नेत्रे उन्मील्य एव निद्राति ?
५. राजस्थाने एव दृश्यमानान् सर्पान् कः पक्षी खादति ?
६. 'प्रार्थनाचक्रं' कुत्र अस्ति ? के तस्य उपयोगं कुर्वन्ति ?
७. जपान्देशीयैः रूपितायाः पुष्पालङ्कारकलायाः नाम किम् ?
८. प्रपञ्चस्तरे अतिदीर्घा भित्तिः का ?
९. 'ईफिल्टवर्' कुत्र अस्ति ?
१०. उष्णतामापके (थर्मामीटर्) कः द्रवलोहः उपयुज्यते ?
११. अमेरिकादेशस्य प्रथमः अध्यक्षः कः ?
१३. 'वर्णानाम् उत्सवः' इति कः उत्सवः निर्दिश्यते ?
१४. प्रपञ्चस्तरे अतिप्राचीनस्य धर्मस्य नाम किम् ?
१५. श्रीलङ्कादेशस्य पूर्वतनं नाम किम् आसीत् ?
१६. प्रपञ्चस्तरे अत्युन्नतं रक्षागोपुरं किम् ?
१७. नोबेल्पारितोषिकं प्राप्तवती सा महिला का, या च भारतं स्वस्य वासस्थानं कल्पितवती अस्ति ?
१८. ब्याड्मिण्टन् क्रीडा कुत्र आरब्धा ?
१९. गान्धिवर्येण निर्दिष्टं तत् वस्त्रं किं, यच्च जनैः स्वयं निर्माय एव धर्तव्यम् इति उच्यते स्म ?
२०. दिल्लीनगरमध्ये प्रवहन्ती नदी का ?

## उत्तराणि

१. पारावतः ।
२. मार्गरिट् थ्याचर् ।
३. गुरुग्रहः ।
४. यतः तस्य नेत्रयोः पक्ष्म न भवति ।
५. कङ्कणपक्षी (बस्टर्ड्)
६. टिबेट्देशे । बौद्धाः ।
७. इकाबेना इति ।
८. चीनादेशीया महाभित्तिः ।
९. फ्रान्स्देशे प्यारिस्सागरे ।
१०. पारदः ।
११. जार्ज् वाशिङ्गटन् ।
१२. अलेक्साण्डर् ग्रहाम्बेल् ।
१३. होलिकोत्सवः ।
१४. हिन्दुधर्मः इति ।
१५. सिलोन् इति ।
१६. दिल्लीस्थं कुतुब्मिनार् ।
१७. मदर् थेरेसा ।
१८. भारतदेशे ।
१९. खादी इति ।
२०. यमुना ।



# श्वश्रू-स्नुषा-सम्बन्धः

शिवनागपुरनामके कस्मिंश्चित् ग्रामे सोमनाथः इति कश्चित् निवसति स्म । तस्य विवाहसमनन्तरम् एव आषाढमासः सन्निहितः । स्नुषाश्वश्रूभ्यां, श्वश्रूजामातृभ्यां च आषाढमासे एकस्मिन् एव गृहे वासः न करणीयः इति काचित् प्रथा अस्ति । अतः सोमनाथः पत्नीं मातृगृहं प्रापय्य प्रत्यागतवान् ।

कानिचन दिनानि अतीतानि । आषाढमासः समाप्तः । सोमनाथस्य पिता पुत्रम् आहूय - "पुत्र ! तण्डुलं गुडं च स्वीकृत्य शास्त्रिणे दत्त्वा मुहूर्तं निश्चित्य आगच्छतु । ततः मात्रा सह श्वशुरगृहं गत्वा पत्नीम् आनयतु" इति उक्तवान् ।

पितुः सूचनानुसारं सोमनाथः तण्डुलं, गुडं, लवणं, कदलीफलं, तिन्त्रिणीं च स्वीकृत्य पुरोहितस्य गृहं गतवान् । सोमनाथस्य आगमनकारणं पृच्छन् पुरोहितः सोमनाथेन आनीतेषु वस्तुषु दक्षिणा नास्ति इति अवलोकितवान् । अतः सः - "किं भोः, सोमनाथ ! नवोढः खलु भवान् ? कः विशेषः ? इतोऽपि अर्धघण्टां यावत् उत्तममुहूर्तः नास्ति । तावत् पञ्चाङ्गपुस्तकस्य स्पर्शं न करोमि अहम् । कार्यरहिततया स्थितिः भवतः अपि क्लेशाय भवेत् । अतः भवान् एकं कार्यं करोतु । वाटिकायां विद्यमानानां तुलसीसस्यानां जलसेचनं करोतु । अर्धघण्टानन्तरं मुहूर्तं ज्ञात्वा वक्ष्यामि" इति उक्तवान् ।

अनन्यगतिकः सोमनाथः वाटिकां गत्वा जलसेचनम् आरब्धवान् । तदा पुरोहितस्य पत्नी पूजापात्राणि तत्र क्षालयन्ती आसीत् ।

सा सोमनाथं दृष्ट्वा - "पत्न्याः आगमनानन्तरं सा भवतः मातुः साहाय्यं यथा कुर्यात् तथा बोधनीया । मम स्नुषा एका अस्ति । भगिन्याः पुत्री एव सा ।

किन्तु किं वा वदानि ? सा महाराज्ञी इव व्यवहरन्ती मां तु तृणाय मन्यते'' इति उक्तवती ।

सोमनाथः किमपि वक्तुम् उद्युक्तः । तावता पुरोहितस्य स्नुषा तत्र आगतवती । दर्वीं चालयन्ती सा - ''किम् एतत् ? गृहकलहस्य विषये अन्येषां पुरतः कथनं किम् उचितम् ?'' इति उच्चध्वनिना पृष्टवती ।

अनन्तरं द्वयोः महान् वाक्कलहः अरब्धः । एतं कलहं श्रुत्वा 'इतःपरं मम गृहे अपि एतादृशकलहः एव भविष्यति चेत् का गतिः' इति चिन्ताक्रान्तः अभवत् सोमनाथः ।

जलसेचनकार्यं समाप्य सोमनाथः पुरोहितसमीपम् आगतवान् । पुरोहितः तम् उद्दिश्य - ''प्रसादं स्वीकरोतु । श्वशुर-गृहगमनाय मुहूर्तम् अपि अन्विष्टवान् अस्मि । तत् भवतु । वरलक्ष्मीव्रताचरणार्थं पत्न्यै शाटिकां सुवर्णाभरणं च अविस्मृत्य नेष्यति एव खलु भवान् ! तथैव पुरोहिताय दक्षिणा अपि अविस्मृत्य दातव्या'' इति वदन् परोक्षरूपेण दक्षिणा न दत्ता इति विषयं स्मारितवान् ।

अनन्तरदिने सोमनाथः मात्रा सह श्वशुरगृहं गतवान् । पुरोहितेन सूचिते मुहूर्ते पत्नीम् अपि स्वग्रामं प्रति आनीतवान् च । सोमनाथस्य श्वशुरगृहे उत्तमं गौरवं लब्धम् आसीत् इति कारणतः सोमनाथस्य माता सन्तुष्टा आसीत् ।

ततः कानिचन दिनानि सुखेन गतानि । गृहकार्ये चतुरा सोमनाथस्य पत्नी श्वश्र्वाः





वर्णयन्ती श्लाघितवती । श्वश्र्वाः वचनं पुरस्कुर्वती इव सोमनाथस्य पत्नी तयोः विषये अत्यन्तम् आदरं प्रदर्शितवती ।

पार्वत्याः अग्रजा सर्वदा स्नुषाम् अवलम्ब्य एव तिष्ठति स्म इति कारणतः पूर्ववत् अग्रजया सह सम्भाषणं कर्तुं न शक्तवती पार्वती । एतेन सोमनाथस्य पत्न्याः विषये असूयां प्राप्तवती सा । गमनसमये सा अग्रजाम् उद्दिश्य - ''भगिनि ! भवतीं दृष्ट्वा बहु दुःखम् अनुभवामि । स्नुषा एव अत्र सूत्र-चालनकार्यं निर्वहन्ती अस्ति । ज्येष्ठा भवती तृणसमा अत्र । भवत्याः ज्येष्ठत्वस्य गौरवं न्यूनीभवत् अस्ति'' इति उक्तवती ।

पार्वत्या आरोपितं विषबीजं फलितम् अभवत् । तस्याः पतिः पुत्रः च क्षेत्रादिकं प्रति गमनसमये स्नुषाम् एव उक्त्वा गच्छतः स्म । एतत्सर्वं सोमनाथस्य मातुः असन्तोषाय जातम् । 'सर्वे मम स्नुषां पुरस्कुर्वन्तः मां तृणीकुर्वन्ति' इति चिन्तितवती सा ।

कदाचित् क्षालनयोग्यानि वस्त्राणि नेतुं रजकस्य पत्नी सोमनाथस्य गृहम् आगतवती । तस्यै वस्त्राणि ददती किमपि वक्तुम् उद्युक्ता सोमनाथस्य माता । तदा रजकपत्नी उक्तवती - ''हा हन्त ! किम् एतत् ! वार्धक्ये भगवन्नामस्मरणपूर्वकं कालः यापनीयः । किन्तु भवती तु गृहकार्ये आत्मानं प्रवर्तयन्ती क्लेशम् अनुभवति । अलम् एतया प्रवृत्त्या । एतादृशेषु कार्येषु

कार्ये सर्वदा साहाय्यं कुर्वती तस्याः प्रीतिं सम्पादितवती आसीत् । कदाचित् सोमनाथस्य माता सोमनाथम् उद्दिश्य - ''वंशोद्धारकः पुत्रः, गृहलक्ष्मीः पुत्री च स्यात् इति सर्वदा ज्येष्ठाः वदन्ति । किन्तु मम कापि पुत्री नासीत् । देवकृपया उत्तमां स्नुषाम् एव प्राप्तवती अस्मि । मातृवत् मयि प्रीतिं प्रदर्शयति एषा'' इति अभिमानपूर्वकम् उक्तवती । इदं श्रुत्वा मनसि एव आनन्दम् अनुभवन् आसीत् सोमनाथः ।

एवं सति नूतना स्नुषा द्रष्टव्या इति अमृतपुरतः सोमनाथस्य मातुः अनुजा पार्वती आगतवती । तया सह सम्भाषमाणा सोमनाथस्य माता स्नुषायाः कार्यकौशलं

स्नुषां नियोजयतु भवती'' इति ।

एतत् श्रुतवत्याः सोमनाथस्य मातुः मनसि भावना उत्पन्ना यत् गृहस्वामिनीत्वम् इदानीं स्नुषायाः अधीनं जातम् अस्ति इति । एतत् चिन्तनं तस्याः मनः कलुषितम् अकरोत् । ततः स्वस्य स्वामिनीत्वं प्रतिष्ठापयितुम् इच्छन्ती सा स्नुषायाः सर्वेषु कार्येषु दोषान् एव उद्भावयितुम् उद्युक्ता अभवत् । श्वश्र्वाः एतादृशं व्यवहारं दीर्घकालं सोढुम् अशक्ता सोमनाथस्य पत्नी प्रतिदूषणम् आरब्धवती । एवं तस्य गृहस्य शान्तिः नष्टा जाता । श्वश्रू-स्नुषयोः कलहतः सोमनाथस्य मनश्शान्तिः अपि नष्टा अभवत् ।

कलहपरिसरम् अनिच्छन् सोमनाथः क्षेत्ररक्षणव्याजेन रात्रौ अपि गृहागमनं परित्यक्तवान् । एतत्सर्वं दृष्ट्वा खिन्नः सोमनाथस्य पिता कदाचित् पुत्रम् उद्दिश्य - ''भवतः मातृभगिन्याः गमनानन्तरं भवतः माता एवं संवृत्ता अस्ति । एतस्याः परिस्थितेः परिहारः कथम् इति अहं जानामि । मम कथनानुगुणम् आचरतु भवान्'' इति वदन् किं करणीयम् इति विवृतवान् ।

तद्दिने सोमनाथः केदारतः यदा गृहम् आगतवान् तदा तस्य माता स्नुषायाः विषये किमपि वक्तुम् उद्युक्ता । अनुक्षणं सोमनाथः कोपं प्रदर्शयन् - ''मम पत्न्या कृतं खादन्ती सुखेन स्थातुं न शक्नोति वा भवती ? वृथा आक्षेपः किमर्थम् ? न इच्छति चेत् स्पष्टं वदतु । अहं पत्न्या सह कुत्रापि गच्छामि । पित्रार्जितसम्पदः भागः अपि मास्तु मम''



इति उक्तवान् ।

एतत् श्रुत्वा तस्य माता कोपेन वाटिकां गत्वा पतिम् उद्दिश्य सोमनाथेन सह प्रवृत्तं कलहं विवृतवती ।

तदा सोमनाथस्य पिता पुत्रम् उद्दिश्य - ''किं भोः, पत्नीं निग्रहीतुम् अपि अशक्तः भवान् कीदृशः पुरुषः ? इतः गन्तुम् इच्छति वा भवान् ? तर्हि गच्छतु नाम । मम पत्न्याः पोषणम् अहं कर्तुं शक्नोमि । किन्तु तस्याः विषये कमपि अपशब्दम् अहं सर्वथा न सहे'' इति उक्तवान् ।

''तथैव उपदेष्टव्यः सः मूर्खः । मम योगक्षेमवहनार्थं भवान् अस्ति इति एतम् अंशम् एव विस्मृतवान् अस्ति खलु एषः'' इति सोमनाथस्य माता उक्तवती ।

तदा सोमनाथः उच्चैः हसन् - ''भवत्याः योगक्षेमार्थं यथा भवत्याः पतिः अस्ति तथैव मम पत्न्याः योगक्षेमार्थम् अहम् अस्मि । पित्रा भवत्याः वचनं श्रोतव्यम् इति अस्ति चेत् मया मम पत्न्याः वचनं श्रुतं चेत् कः दोषः ? पिशुनवचने विश्वासं कुर्वत्या भवत्या भ्रान्तिः प्राप्ता - 'गृहे मम स्वामिनीत्वं नष्टम्' इति । तत्कारणतः एव एतत्सर्वं प्रवृत्तम्'' इति उक्तवान् ।

सोमनाथस्य वचनं श्रुत्वा स्वदोषं ज्ञातवती तदीया माता क्षणकालस्य मौनस्य अनन्तरम् उक्तवती - ''वत्स ! युक्तम् अस्ति भवतः वचनम् । पिशुनवचने विश्वस्य मया भ्रमेण विकृताचरणं प्रदर्शितम् । वस्तुतः तु भवतः पत्नी मां मातृवत् पश्यति । श्वश्रूत्वरूपः अहङ्कारः मम आसीत् इत्यतः एतत्सर्वं प्रवृत्तम्'' इति ।

किञ्चिद्दूरे स्थित्वा सर्वम् अपि श्रुतवती सोमनाथस्य पत्नी धावन्ती आगत्य श्वश्र्वाः पादौ गृहीत्वा - ''अम्ब ! मां क्षाम्यतु कृपया । कोपतापादिकं गृहे सहजम् इति अवगच्छन्त्या मया सहनया व्यवहरणीयम् आसीत् । इतःपरम् अहं योग्या स्नुषा इव गृहे व्यवहरिष्यामि'' इति उक्तवती ।

अन्यथाभावस्य निवृत्त्या तस्मिन् गृहे शान्तिः पुनः स्थापिता अभवत् । सर्वे सन्तोषेण जीवितवन्तः ।





# पिशाच्योः कृपा

श्रीरङ्गपुरनामके ग्रामे रामः नाम कश्चित् आसीत् । तस्य मित्रं देवराजः । तौ प्रतिवेशिनौ । तौ उभौ अपि सामान्ये कुटीरे वसतः स्म । द्वयोः कुटीरयोः मध्ये एकः वटवृक्षः आसीत् । वृक्षं परितः वितर्दिं निर्माय तत्र उपविश्य तौ तदा तदा जल्पनं कुरुतः स्म ।

कदाचित् तत्र उपविश्य जल्पनसमये देवराजः - ''भोः मित्र, अग्रे कदाचित् आवाभ्यां बहुधनं सम्पाद्य गृहनिर्माणं करिष्यते चेदपि एषः वृक्षः वितर्दिः च तथैव रक्षणीयः । अत्र एव उपविश्य आवां तदा तदा सम्भाषणं करवाव'' इति उक्तवान् ।

''तथैव भवतु मित्र । किन्तु मम एका सूचना अस्ति । एषा वितर्दिः मृत्तिकया निर्मिता अस्ति । अस्याः उपरि अमृतशिलानाम् आवरणम् करवाव । तदर्थं महान् व्ययः कोऽपि करणीयः न भवेत् । पञ्चसहस्रं रूप्यकाणि पर्याप्तानि भवेयुः'' इति उक्तवान् रामः । देवराजः किमपि उत्तरं वक्तुम् उद्युक्तः । तावति काले नद्याः जलम् आनयन्ती रामस्य पत्नी तत्र आगता । पतिम् उद्दिश्य सा - ''दर्पणः भग्नः अस्ति । नगरतः नूतनः दर्पणः आनेतव्यः इति बहुवारम् उक्तं मया । मम वचनम् अशृण्वन् भवान् अत्र सुखेन उपविश्य जल्पने मग्नः अस्ति । धिक् भवन्तम् । अद्यैव नगरं गत्वा दर्पणम् आनयतु तावत्'' इति उक्तवती ।

''अहं व्यर्थं कालहरणं कुर्वन् अस्मि इति चिन्तितवती वा भवती ? भाग्यदेवता यदा कदापि अस्मान् अन्विष्य आगन्तुम् अर्हति । तदा किं किं करणीयम् इति चिन्तयन् अस्मि'' इति उक्तवान् ।

तावता अवकरं क्षेप्तुं बहिः आगता देवराजस्य पत्नी पतिम् उद्दिश्य - ''मूषकग्रहणार्थं कूटयन्त्रम् आनयतु इति



मया बहुवारम् उक्तम् । किन्तु तत् भवता न श्रूयते एव । दौर्भाग्यं मम'' इति वदन्ती सरभसम् अवकरकण्डोलम् अधः स्थापितवती ।

पत्नीपीडा अपरिहार्या इति ज्ञात्वा नगरं प्रति प्रस्थितौ तौ । गमनमार्गे अरण्यम् अतिक्रम्य गन्तव्यम् आसीत् । शीघ्रं गृहं प्राप्तव्यम् इति इच्छया तौ वेगेन पदं स्थापयन्तौ आस्ताम् । तौ यदा अर्धमार्गं क्रमित्वा आगतवन्तौ तदा अनिरीक्षिततया स्तनित-तटिद्भ्यां युक्ता वृष्टिः आरब्धा । अग्रे गन्तुम् अशक्तौ तौ कस्यचित् वृक्षस्य अधः स्थितवन्तौ ।

तावता तयोः समीपे एव कुत्रचित् अशनिपातः अभवत् । तदा देवराजः भीत्या कम्पमानः - ''धिक् दर्पणं, कूटयन्त्रं च । राम, अद्य आवयोः इतः निर्गमनं किं शक्यम् ?'' इति पृष्टवान् ।

''मित्र ! अलं भयेन । वृष्टिः न्यूना चेत् अद्य रात्रौ एव आवां गृहं प्राप्तुं शक्नुयाव । एतत् नाममात्रेण अरण्यम् । अत्र व्याघ्राः सिंहाः वा सर्वथा न सन्ति'' इति उक्तवान् रामः ।

रात्रौ वृष्टिः स्थगिता । ''रक्षितौ आवाम्'' इति चिन्तयन्तौ तौ ततः प्रस्थितवन्तौ । किञ्चित्कालानन्तरं ताभ्यां कश्चन वटवृक्षः दृष्टः । तत्र, तस्य वृक्षस्य जटाभिः आन्दोलिकाम् एकाम् कृत्वा उभे पिशाच्यौ क्रीडतः स्म । ते द्वे अपि गीतं गायन्त्यौ अट्टहासं कुर्वत्यौ आस्ताम् ।

पिशाचीदर्शनात् भीतौ रामदेवराजौ पलायनार्थम् उद्युक्तौ । किन्तु पिशाचीभ्यां रामदेवराजौ दृष्टौ । तयोः एका वामना पिशाची, अपरा उन्नता पिशाची । वामना पिशाची करताडनपूर्वकं तौ आहूय - ''भवतोः प्राणभयं नास्ति । अत्र आगच्छताम्'' इति आहूतवती ।

एतत् श्रुत्वा रामदेवराजौ कम्पमानौ पिशाच्योः पुरतः आगत्य स्थितवन्तौ । तदा उन्नतपिशाची - ''भयं मास्तु । भवतोः विवाहः अभवत् वा ?'' इति पृष्टवती ।

'कीदृशः प्रश्नः एषः ?' इति चिन्तयन् रामः - ''विवाहितौ इति कारणतः एव क्लेशम् अनुभवन्तौ स्वः । पत्नीवचनम् उल्लङ्घितुं न शक्नुवः इत्यतः एव नगरं प्रति

प्रस्थितौ आवाम्'' इति उक्तवान् । अरण्ये प्रवृत्तं सर्वं निवेदितवान् च ।

सर्वं श्रुत्वा सा पिशाची सम्यक् हसन्ती - ''तदस्तु तावत् । पत्न्याः विषये भवतोः भीतिः अस्ति, उत प्रीतिः ?'' इति पृष्टवती ।

''प्रीतिः भीतिः चेति उभयम् अपि अस्ति'' इति उक्तवान् देवराजः ।

तदा उन्नतपिशाची - ''भवादृशजनयोः प्रतीक्षायाम् आस्व आवाम् । अतः गृहगमनानन्तरं यथा अत्र उच्यते तथा आचरणीयं भवद्भ्याम्'' इति उक्तवती ।

''तथा कृतं चेत् कः लाभः ?'' इति पृष्टवान् देवराजः ।

परस्परं चर्चां कृत्वा पिशाच्यौ - ''आवाभ्यां यथा उच्यते तथा आचर्य पत्न्या कृतां प्रतिक्रियाम् अत्र रात्रौ आगत्य वदतः चेत् द्वयोः कृते अपि सुवर्णनाणकानि दास्यावः'' इति उक्तवत्यौ ।

सुवर्णनाणकस्य विषयं श्रुत्वा आनन्देन - ''किं करणीयम् इति वदतां तावत्'' इति उक्तवान् रामः ।

ताभ्यां यद्यत् करणीयं तत्सर्वम् उक्त्वा - ''यावत् उक्तं तावदेव करणीयम् । एतदतिरिच्य किमपि न करणीयम् । श्वः रात्रौ अत्र आगच्छताम्'' इति सूचितवत्यौ पिशाच्यौ ।

पिशाचीभ्याम् उक्तं स्मरन्तौ गृहं प्राप्तवन्तौ रामः देवराजश्च ।

द्वारम् उद्घाटयन्ती रामस्य पत्नी -



''भवान् रिक्तहस्तः सन् प्रत्यागतवान् इव दृश्यते ! दर्पणः न आनीतः वा ?'' इति पृष्टवती । तदा रामः उत्तरं किमपि अकथयन् पत्नीम् अपसार्य अन्तः आगतवान् ।

''किं भवान् उन्मत्तः जातः ?'' इति वदन्ती सरभसं द्वारं पिहितवती रामस्य पत्नी ।

अत्रान्तरे देवराजस्य पत्नी अपि द्वारम् उद्घाट्य रिक्तहस्तं पतिं दृष्ट्वा - ''कूटयन्त्रं कुत्र ?'' इति पृष्टवती । उत्तररूपेण पत्नीं बलात् आकृष्य अपसार्य अन्तः गतवान् देवराजः । अनिरीक्षिताम् एतां घटनां दृष्ट्वा चकिता सा - ''भवान् पिशाचग्रस्तः इव भाति'' इति आक्रोशं कृतवती ।



"अहं तु सूर्योदयात् पूर्वम् एव कोट्यधिपतिः भवितुम् इच्छामि" इति कोषे विद्यमानं नाणकं स्पृशन् उक्तवान् रामः ।

एतयोः वचनं श्रुत्वा पिशाच्यौ परस्परं मुखं पश्यन्त्यौ हसितवत्यौ । अनन्तरम् उन्नता पिशाची - "अपेक्षाकरणम् अपराधाय न । किन्तु अपेक्षापूरणार्थम् अत्रत्यस्य श्रीगन्धकाष्ठस्य गजदन्तानां च चौर्यं, ततः कारागृहप्राप्तिः च न उचिता । सुवर्णनाणकानि आवश्यकानि चेत् अद्यापि आवयोः कथनानुगुणम् आचरणीयं, गृहे यद्यत् प्रवृत्तं तत्सर्वं श्वः अत्र आगत्य वक्तव्यं च" इति उक्त्वा ताभ्यां किं करणीयम् इति विवृतवती ।

तस्मिन् दिने रात्रौ तौ यथापूर्वं गृहं प्राप्तवन्तौ । पत्नीं दृष्ट्वा कोपेन - "भवत्याः मुखम् अनिष्टकारकम् । अतः एव लक्षशः रूप्यकाणां सम्पादनस्य सामर्थ्ये सति अपि प्रतिदिनं चत्वारि रूप्यकाणि अपि सम्पादयितुं न शक्नोमि । धिक् भवतीम् । धिक् मानहीनताम् । यदि मानः स्यात् तर्हि मातृगृहं प्रति गमनं वरं स्यात्" इति उक्तवन्तौ । पत्युः एतादृशं निन्दनवचनं श्रुत्वा अपि ते उभे अपि मौनं स्थितवत्यौ ।

तस्मिन् दिने रात्रौ पुनश्च रामदेवराजौ अरण्यं गत्वा प्रवृत्तं सर्वं निवेदितवन्तौ । "आश्चर्यं नाम यावत् वा तर्जितं चेत् अपि आवयोः पत्न्यौ मातृगृहं न गतवत्यौ एव" इति उक्तवन्तौ ।

तयोः वचनं श्रुत्वा पिशाच्यौ न

अनन्तरदिने रात्रौ रामदेवराजौ अरण्यं गत्वा स्वस्य आचरणं पत्न्याः प्रतिक्रियां च पिशाच्योः समीपे विवृतवन्तौ । तत् श्रुत्वा सम्यक् हसन्त्यौ पिशाच्यौ वृक्षस्य कोटरे विद्यमानं सुवर्णनाणकद्वयम् आनीय एकैकस्मै एकैकं नाणकं दत्तवत्यौ । नाणकं स्वीकृत्य प्रस्थितवन्तौ तौ पुनः आहूय - "तिष्ठताम् । आवयोः विनोदस्वभावः अस्ति । अन्यथा मा चिन्तयताम् । भवन्तौ अधिकं सुवर्णं प्राप्तुं न इच्छतः वा ?" इति हसन्ती पृष्टवती वामना पिशाची ।

"सुवर्णप्राप्तेः इच्छा कस्य वा न भवति ? यदि शक्यते तर्हि एकदिनाभ्यन्तरे लक्षाधिपतिः भवितुम् इच्छामि" इति उक्तवान् देवराजः ।

आनन्दिते, अपि तु दुःखिते । तयोः महती निराशा अभवत् । द्वे अपि एककण्ठेन - "हा धिक् । द्वे अपि स्त्रीकुलीये भवितुं नार्हतः एव । एतादृशः अवसरः यदा आवाभ्यां सम्मुखीकृतः आसीत् तदा आवां कोपेन गृहस्य पृष्ठतः विद्यमाने कूपे पतनपूर्वकं प्राणान् त्यक्त्वा पिशाचजन्म प्राप्तवत्यौ । भवतोः पत्न्यौ दृढमनस्के" इति उक्तवत्यौ ।

तावता - "आवां दृढमनस्के इति तु सत्यम् । किन्तु भवत्यौ इव मूर्खे तु सर्वथा न" इति वचनं श्रुत्वा पिशाच्यौ, रामदेवराजौ च चकिताः ।

पतौ हठात् जातं परिवर्तनं दृष्ट्वा चकिते रामस्य पत्नी, देवराजस्य पत्नी च पतिम् अनुसृत्य आगतवत्यौ आस्ताम् । प्रवृत्तस्य कारणं पिशाच्यौ एव इति ज्ञातवत्यौ आस्तां च । अतः ते आत्मना सह आनीतया निम्बशाखया उभे अपि पिशाच्यौ सम्यक् ताडितवत्यौ । तदा आक्रोशं कुर्वत्यौ पिशाच्यौ वटवृक्षस्य उपरि उड्डीय अदृश्यतां गते । ततः रामदेवराजौ उद्दिश्य - "अलं भवतोः नाटकेन । गृहं प्रति आगम्यताम्" इति कोपेन उक्तवत्यौ ।

पिशाचीभ्याम् इव आवाभ्याम् अपि ताडनं प्राप्तव्यं भवेत् इति चिन्तयन्तौ रामः देवराजः च भीतौ । अत्रान्तरे किमपि स्मरन् देवराजः - "हा, स्मृतम् । वृक्षकोटरे सुवर्णनाणकानि भवेयुः एव" इति वदन् वृक्षकोटरे हस्तं प्रसारितवान् । तेन तत्र बहूनि सुवर्णनाणकानि प्राप्तानि । तानि द्विधा विभज्य स्वीकृतवन्तौ देवराजः रामः च ।

ततः गृहं प्रत्यागतौ तौ स्वकुटीरम् अपनीय तस्मिन् एव स्थले उत्तमं गृहं निर्मितवन्तौ । 'गृहयोः मध्ये अमृत-शिलामयी वितर्दिः निर्मातव्या' इति तयोः स्वप्नः आसीत् खलु ? तदनुगुणं तौ अमृतशिलामयीं वितर्दिं निर्मितवन्तौ । तत्र च उपविश्य सन्तोषेण वार्तालापं कुर्वन्तौ, तृप्तिं च अनुभवन्तौ बहुकालं यावत् सुखेन जीवितवन्तौ ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां जून् - १९९६ मासे प्रकटयिष्यामः ।



Mohantesh C. Morabad



Shrikant Amrute

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा एप्रिल् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

**'फेब्रवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -**

प्रथमचित्रम् - भोः मातापितरौ, निरीक्ष्यते खलु सुता ?

द्वितीयचित्रम् - अयि बाले, किं निरीक्ष्येते पितरौ ?

प्रेषकः - श्री कण्ठंराजु शिवराम कोटेश्वरराव्, नान्देड्लवारिवीथी, अद्दङ्कि - ५२३ २०१ (आ.प्र.)


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ६०-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

THE MOST ENDEARING GIFT YOU CAN THINK OF
FOR YOUR NEAR AND DEAR WHO IS FAR AWAY

# CHANDAMAMA



**Give him the magazine in the language of his choice—**
Assamese, Bengali, English, Gujarati, Hindi, Kannada,
Malayalam, Marathi, Oriya, Sanskrit, Tamil or Telugu
**—and let him enjoy the warmth of home away from home.**

**Subscription Rates (Yearly)**

**AUSTRALIA, JAPAN, MALAYSIA & SRI LANKA**

By Sea mail Rs.**117.00** By Air mail Rs. **264.00**

**FRANCE, SINGAPORE, U.K., U.S.A.,**
**WEST GERMANY & OTHER COUNTRIES**

By Sea mail Rs. **123.00** By Air mail Rs. **264.00**

**Send your remittance by Demand Draft or Money Order favouring**
**'Chandamama Publications' to:**

CIRCULATION MANAGER **CHANDAMAMA PUBLICATIONS** CHANDAMAMA BUILDINGS
VADAPALANI MADRAS 600 026